श्रीआत्मानन्द–ग्रन्थरत्नमाला–अष्टत्रिंशत्तमम् रत्नम् ( ३८ )

॥ श्रीमद्विजयानन्दसूरीश्वर–श्रीमद्विजयकमलसूरीश्वरपादपद्मेभ्यो नमोनमः ॥

न्यायविशारद–न्यायाचार्य्य–श्रीमद्यशोविजयोपाध्यायसंकलितम् श्रीमद्देवभद्रमुनीशकृतटीकासंवलितम् ॥

# श्रीज्ञानसारसूत्रम् ॥

श्रीमद्वल्लभविजयशिष्य–मुनिललितविजयेन संशोधितम् ॥

स्वर्गस्थ–श्रीमन्मोहनलालजिन्मुनिपुङ्गवान्तेवासि–मुनिवर्य्य–श्रीमद्धितमुनिमहाशयोपदेशेन

प्रकाशयित्री–भावनगरस्था–श्रीआत्मानन्दसभा ।

इदं पुस्तकं मुम्बय्यां वल्लभदासत्रिभुवनदास गांधी सेक्रेटरी जैनआत्मानन्दसभा भावनगर इत्यनेन निर्णयसागरमुद्रणालये कोलभाटवीथ्यां २३, तमे गृहे रामचंद्र येसू शेडगेद्वारा मुद्रयित्वा प्रकाशितम् ।

वीरसंवत् २४४१. विक्रमसंवत् १९७१. आत्मसंवत् २०.

इस ग्रन्थके छपानेमें जिनमहाशयोंतर्फसें पहले सहायता मिली है उनके अमरनामोंका यहां न्यास किया जाता है

१ श्रीसंघ—गाम गंभीरा"
२ श्रीसंघ—चमारगाम"
३ शेठ-फूलचंद भाई मु० उमेटा"
४ शेठ-चूनीलालभाई मु० नवाखल"

} स्टेट गायकवाड महाराजा

इन सज्जनमहाशयोंका यहां उपकार माना जाता है और आशाकी जाती है कि अन्य महानुभाव भी इन धर्मात्माओंके इस प्रशंसनीय कामका अनुमोदन करके लाभ उठायेंगे.

लि० सेक्रेटरी–श्रीआत्मानन्दजैनसभा भावनगर.

१५–७–१५.

॥ अर्हम् ॥

## ॥ प्रस्तावना ॥

"यं बुद्धम् वोधयन्तः शिखिजलमरुतस्तुष्टुवुर्लोकवृत्त्यै, ज्ञानं यत्रोदपादि प्रतिहतभुवनालोकवन्ध्यत्वहेतुः ।
"सर्वप्राणिस्वभाषापरिणतिसुभगं कौशलं यस्य वाचां, तस्मिन्देवाधिदेवे भगवति भवतां धीयताभक्तिरागः ॥ १ ॥

सम्यग्ज्ञानगरीयसां सुचवसां चारित्रबृंहीयसां, तर्कन्यायपटीयसां शुचिगुणप्राग्भारबंहीयसाम् ।
विद्यामन्त्रमहीयसां सुमनसां भव्यव्रजप्रेयसां, धत्तोच्चैस्तपसां विकाशियशसां सम्यग्गुरूणां गिरः ॥ १ ॥

मुक्तौ गंतरि मोहहन्तरि सदा शास्त्रस्थितौ रन्तरि ध्यानध्यातरि धर्मधातरि वर–व्याख्यातरि त्रातरि ।
विद्वद्भर्त्तरि शीलधर्त्तरि तमः स्तोमन्तिरस्कर्त्तरि द्वेषच्छेत्तरि रागभेत्तरि गुरौ भक्ताः स्थ वाग्वेत्तरि ॥ २ ॥

सुविदितमेव सुमेधसां यत्खलु परार्थायैव महात्मनामवतारः । स्वात्मनि कृतकृत्यतां गता अपि तीर्थनाथा यदुपदिशन्ति वाङ्मयं, यद्विहरन्ति मह्याम् । यदश्नन्ति शुद्धमाहारजातम् यद्दधति धर्मायतनम् तत्सर्वं परोपकृतिकृते एव। यच्चानुष्ठितम् । तैस्तदेवानुतिष्ठन्ति "महाजनो येन गतः स पन्था" इति न्यायमनुसृत्य तदनुगामिनो महानुभावा गणनायकाः । यच्चानुपालितम् गणभृद्भिस्तदेवानुपालयन्ति स्म आचार्य्याः । इत्थं चातिगभीरैरावणगन्धसिन्धुरगत्या वहमाने पारङ्गतशासने समतिक्रान्तेषुचत्वारिंशदुत्तरैकविंशतिशतवर्षेषु । प्रसिद्धसिद्धार्थराजनन्दननिर्वृतेर्जगद्विख्यातकीर्तीनाम् निजातुलमतिवि-

जितसुरसूरीणां । श्रीमद्विजयहीरसूरीणां चरणसेवाहेवाकिलब्धाखिलऋषीकविजयानां निखिलकल्याणनिलयानां श्रीमत्-कल्याणविजयानां सन्तानीयश्रीमन्नयादिविजयान्तेवासीनां न्यायविशारदश्रीमद्यशोविजयानां जनिरभूत्। ते च गृहीत-जिनदीक्षाः अभ्यस्तयतिशिक्षा स्वकलाकौशलविमलफलभरप्रीणिताशेषकोविदतितीर्णन्यायविशारदविरुदाः श्रीजिनशा-सनाम्बरं प्रकाशयामासुः, इमे खलु शासनप्रासादस्तंभकल्पाः न्यायसाहित्याद्यनेकविषयपोषकानऽनल्पान् निबन्धान्निब-बन्धुः ते हि तार्किकशिरोमणितयाख्यातिं गता अपि असंख्यसंख्यावल्लक्षपक्षविहितबहुलक्षणे लक्षणे, सकलकविकुल-संपादिताविकलसौहित्ये, साहित्ये, छन्दोऽनुशासनालङ्कारचूडामणिकाव्यप्रकाशतत्संकेतकविशिक्षापरिमलादिछन्दः शास्त्रे, ऐन्द्रचान्द्रजैनेन्द्रसिद्धहेमपाणिनीयशाकटायन वामनविश्रान्त विद्याधरसरस्वतीकंठाभरणकलापाद्यनेकेषुशब्दशास्त्रेषु, बौद्ध-नैयायिकसांख्यवैशेषिकजैमनीयादिसकलसाम्प्रदायिकतन्त्रेषुच सर्वतन्त्रस्वतन्त्रतां बिभ्रतुः स्मेति, श्रीमद्वाचकवराः कदा समजा-यन्त? काँस्काँश्च ग्रंथान्निर्मितवन्त? इत्याद्यनल्पतद्वृत्तज्ञानेच्छावद्भिः श्रीमद्यशोविजयग्रंथमालायाः प्रस्तावनाऽवलोकनीयेति,

श्रीमतां जन्मदीक्षादिसमयसूचकानि समर्थसाधनानि अद्ययावत्केनापि कुत्रापि प्राप्तानीति न संभाव्यते यद्यपि मुनि-वर्यश्रीमद्बुद्धिसागरैर्गुर्जरभाषायां मोहनलालदलीचंद्र बी० ए० एम्० ए० हाईकोट वकील इत्यनेन महाशयेन इंग्लिश-भाषायां च पूज्यपादचरितं निबद्धम् तथापि तत् सर्वं स्वल्पप्रायम्, एतन्निबन्धद्वितयाधारेणैवात्रापि किञ्चिद्वितन्यते कवि-तार्किक-शिरोमणयो महामहोपाध्यायाः श्रीमद् यशोविजयोपाध्याया वैक्रमीये ( १६७० ) तमे वत्सरे गुर्जरदेशे अहमदा-बादपत्तने उपकेशवंशे ( ओसवालवैश्यकुले ) प्रादुर्बभूवुः । केचन वदन्तिः—गुर्जरदेशे राधनपुरनगरे प्राग्वाटवंशे (दसा-

पोरवालवैश्यकुले ) श्रीमालीवैश्यकुले वा एते समुत्पन्नाः । एषां समानकालीना जैनविद्वांसः पन्याससत्यविजय वाचक-विनयविजय पं० मानविजयप्रभृतय आसन् । एषां जनको बाल्य एव दिवं गतः। बाल्य एवैषामद्भुतस्मरणशक्तेः परिचयो जातस्तद्यथा—एषां जननी प्रतिदिनं गुरुसविधे भक्तामरस्तोत्रं शृणोति स्म । वर्षतौं कदाचित् अतिवृष्ट्याऽस्वस्थतया च। सा गुरुसविधे गत्वा श्रोतुं न शशाक । अस्याः खल्वयं नियम आसीद् यदन्तरेण स्तोत्रश्रवणं न भुङ्क्ते । अतस्त्रीणि दिनानि सा आहारं न जग्राह तदानीमस्य शिशोः नाम "यशो"इत्यासीत्, वयश्च सप्तवर्षमितम् । चतुर्थे दिने यशो जननीमवोचत् मातः ! कथं न दिनत्रयं भुक्तवती ? सा प्राह वत्स ! भक्तामरस्तोत्रश्रवणानन्तरमेव भुज्यते नान्यथा इति मम नियमः । श्रुत्वै-तद् विनय-नम्रः पुत्रः प्राह, अहं त्वां स्तोत्रं श्रावयामि यदीच्छसि । आश्चर्यमग्ना जननी पृष्टवती-कुतस्त्वयेदं स्तोत्रं शिक्षितम् ? । स अवोचत्-त्वया सार्धमेकदाहमुपाश्रयं गतः तत्रैव गुरुमुखात् श्रुतं तन्नाद्यापि विस्मृतम्। मातृमुखात् "श्रावय" इत्यादेशमासाद्य विस्पष्टमस्खलितं पूर्णं स्तोत्रं स श्रावयामास । अनेन जनन्या अतिशायी आनन्दो जातः। दिनच-तुष्टयं यावदेवमेव सा पुत्रमुखात् स्तोत्रं श्रुतवती भुक्तवती च। वर्षणे मन्दे जाते सा उपाश्रयं जगाम । गुरुणा पृष्टा सुश्राविके ! सप्त दिनानि यावत् किं न भुक्तवती ? यत्स्तोत्रश्रवणमन्तरेण न भुंजे इति तव नियमः । सा च निखिलं पुत्र-वृत्तं-गुरवे निवेदितवती । गुरुणाऽपि आहूय ततः स्तोत्रं श्रुतं, अद्भुतां स्मरणशक्तिमवलोक्य गुरुराश्चर्यं जगाम । गुरोर्नाम "श्रीनयविजय" इत्यासीत् । एकदा गुरुणा विचारितं, यद्ययं दीक्षां गृह्णीयात् तदा महान्तमुपकारं कुर्यात्, ततश्च जैनसङ्घमाहूय स्वविचारस्तस्मै निवेदितः । जैनसङ्घनायकैस्तन्मातुः सविधे गत्वा निवेदितं भद्रे ! पुत्रदीक्षां मन्यस्व

यतस्तव पुत्रो बुद्धिविभवसम्पन्नो दीक्षितः सन् जैनधर्मप्रभावको भविष्यति । अतः परं किं मम कृते श्रेयः यं "तीर्थ-करा अपि नमस्यन्ति स सङ्घोऽद्य मां याचते" इति विचार्य प्रसन्ना सा ब्रूते स्म अहं समर्पयामि पुत्रं, दीक्षां गृहीत्वा भवत्वयं जैनधर्मप्रभावक इति श्रुत्वा हर्षपूर्णहृदयागुरुवरास्तं प्रव्राज्य "यशोविजय" इत्यभिधां ददुः

ततः सकलमङ्गलजननीं जन्म–मरण–रूप–संसारापहारिणीं जैनीं दीक्षां गुरुसमीपे गृहीत्वा श्रीमद्यशोविजयैः वहवो जैनग्रन्था अधीताः । तदनन्तरं गुरुणा श्रीमद्यशोविजया महामतयो विनयविजयाश्च जैनेतरविविधशास्त्राण्यध्येतुं काशीं प्रेषिताः । तत्र श्रीमद्यशोविजयैः प्राधान्येन न्यायशास्त्रं, श्रीविनयविजयैश्च व्याकरणं द्वादशभिर्वर्षैः पूर्णमधीतम् । एकदा विजितानेकसभः कश्चन दाक्षिणात्यो महापण्डितः काश्यां सम्प्राप्तः, सभायां श्रीमद्यशोविजयैः स निर्जित इति तत्रत्यैर्विद्वद्भिरिमे "न्यायविशादा" इति पदवीप्रदानेनालङ्कृताः । ततो गङ्गातटे ऐंकारवीजपूर्वकमन्त्रजापेन अज्ञान-तमोनाशिनीं भगवतीं सरस्वतीमिमे प्रत्यक्षीचक्रुः । भगवत्या "वरं ब्रूहीत्युक्ते "जैनधर्मप्रभावनाकृते शास्त्ररचने साहाय्यं देही"ति प्रार्थिता सा "एवमस्त्विति" प्रोच्यान्तर्हिताऽभवत् । ततो न्यायशास्त्रसवन्धिग्रन्थशतकमेभिर्निर्मितम् । ग्रन्थगौरववशीकृतान्तःकरणैः काशीवासीभिर्मनीषिभिः "न्यायाचार्य" इति पदवीप्रदानेनापीमे सत्कृताः । एतद्वृत्तं "जैन-तर्कपरिभाषा" ग्रन्थे एभिरेव प्रकाशितम्, तद्यथाः—

"पूर्वं न्यायविशारदत्वविरुदं काश्यां प्रदत्तं बुधै, न्यीयाचार्यपदं ततः कृतशतग्रन्थस्य यस्यार्पितम्
शिष्यप्रार्थनया नयादिविजयप्राज्ञोत्तमानां शिशु, स्तत्वं किञ्चिदिदं यशोविजय इत्याख्याभृदाख्यातवान् " ॥

विद्यागुरुं ब्राह्मण–पण्डितमवोचन् "यदा ममावश्यकता
काश्यां नानाशास्त्राण्यभ्यस्य यदेमे गुर्जरदेशं प्रति प्रस्थितास्तदा विद्यागुरुं ब्राह्मण–पण्डितमवोचन् "यदा ममावश्यकता
भवेत् तदा गुजरदेशंप्रत्यागन्तव्य" मिति । काशीतो गुर्जदेशमागत्य कियता कालेनेमेस्तंभनपुरं(खम्भात) नामकं नगरम-
मलञ्चक्रुः तत्रैकदा व्याख्याने समापित एव विद्यागुरुर्ब्राह्मण–पण्डितः सभायां समाययौ; श्रीमदुपाध्यायैः श्रावकैश्च सम्मा-
नितः । अनन्तरं तत्रत्यैः श्रावकैः सप्तति सहस्राणि मुद्रा गुरु–दक्षिणा–रूपेण विद्यागुरवे समर्पिताः । श्रीमदुपाध्यायैरनेकेषु
नगरेषु ग्रामेषु च विहृत्य धर्मः श्रावित, प्रतिकूलवादिनां पराजयः कृतः, अनेके संस्कृतग्रन्थाः प्राकृतग्रन्था, गुर्जरभाषा-
ग्रन्थाश्चरचिताः । एभिर्निर्मितानां ग्रन्थानामवलोकनेन एषां नानाशास्त्रपरिशीलनं बुद्धिवैभवं परमेश्वरभक्तिरसास्वादसंवे-
दनशीलमन्तःकरणं च परिस्फुटमनुभूयते । वैक्रमीये १७४५ तमे वत्सरे वीरक्षेत्र ( वडोदा ) नगरतः नातिदूरे दर्भावती
( डभोई ) नामकग्रामे भगवन्तं वीतरागं संस्मृत्य इमे दिवं गताः ॥

यांश्च वै शतं ग्रन्थान्, पूज्या निर्मितवन्तस्तन्मध्यगत एवायं ग्रंथः । एनं च ग्रंथं विभुवराः "सिद्धपुर" नगरे दीपालिको-
त्सवदिने पूरणीचक्रुः परंच स किंसंख्याको वत्सर? इति प्रमायां प्रमाणाभावात् प्रमातुं न शक्यते, विभुवरैः स्ववंशदीपिकाचे
यमित्थं श्रीअध्यात्मिकमतपरीक्षाप्रान्ते निवेशिता ।

विबुधनिकरसेव्यः शोभते प्रौढिमाब्धि–स्तपगणसुरशाखी भूरिशाखाभिरामः ।
अजनि रजनिनाथस्पर्द्धिकीर्त्तिप्रतानो, मतिजितसुरसूरिर्हीरसूरिस्तदीशः ॥ १ ॥
अकलयदथ लीलां तस्य पट्टोदयाद्रौ, महति विजयसेनः सूरिराजः सभानोः ।

प्रसरति घनघोरे यस्य कीर्त्तिप्रताने, विधुरभवदुडूनां लक्ष्ममात्रोपलक्ष्यः ॥ २ ॥
विजयिविजयदेवः सूरिराट् तस्य पट्टे, स जयति यतिकोटीमौलिकोटीरकल्पः ।
कलयति न सपत्नीर्वीक्ष्य गौरीकृतायद्, विधुधवलयशोभिः शैलपुत्रादिशः किम् ? ॥ ३ ॥
श्रीविजयसिंहसूरिस्तत्पट्टवियन्नभोमणिर्जयति, यस्य प्रतापपूषा, दुर्वादितमः शमं नयति ॥ ४ ॥
वाचकपरिषत्तिलक–श्रीमत्कल्याणविजयशिष्याणाम्, गंगाजलविमलधियां, शिष्याः वुधलाभविजयानाम् ॥ ५ ॥
श्रीजीतविजयविधास्तेषां गच्छे जयन्ति शुद्धधियः । राजंति तत्सतीर्थ्याः श्रीनयविजयाभिधा विवुधाः ॥ ६ ॥
तच्चरणकमलसेवा–मधुकरकल्पेन यशोविजयगणिना । स्वोपज्ञाध्यात्मिकमत–खंडनवृत्तिर्विरचितेयम् ॥ ७ ॥

ग्रन्थस्यास्य विवेचनं गुर्जभाषायामपि लिलखुस्त एव पूज्याः कस्य चिच्छ्राद्धस्य प्रार्थनया ततश्च विक्रमसंवत् १७९६ वर्षे खरतरगच्छालंकारभूतैरध्यात्ममतरसिकैः । मुनिवर्यश्रीमद्देवचंद्राभिधैरस्य ग्रन्थस्योपरिसविस्तरा वृत्तीरचिता । दरिदृश्यते सैवैषाद्य समर्प्यते विदुषां करकमेल ।

अस्य ग्रन्थस्य संशोधनसमये भावनगरसंघसत्कम् पुस्तकमेकमेवासीत्तदपि नातिशुद्धम् प्रत्युताऽशुद्धप्रायमनेनैकेनैव आदर्शाधारेण संशोधितमिदम् । तत्र च टीकाऽवलोकनेन संभाव्यते यदुत श्रीमद्देवचंद्रमुनिवराणां द्रव्यानुयोगविपये-अनल्पाऽप्रतिहतप्रसरा च प्रवृत्तिरभूत्, परंच तत्र वहूनां शव्दशास्त्राशुद्धप्रयोगानां दर्शनान्नशक्यते निर्णेतुं यत् किमु

रचनासमय एवेदं पुस्तकं तादृशं रचितं वा पश्चात्तादृशं जातमत्र तत्त्वं तत्त्वविदो विदन्ति । परं चेमानि द्वात्रिंशदष्टकरत्नानिविज्ञानसूत्रग्रथितानि कण्ठे धारितानि निर्वृतिंप्रदानि भवंति ।

इहच प्रथमे संस्करणे बहूनामशुद्धीनां संभवस्तथापि शुद्धपुस्तकानुसारेण स्वमत्यनुसारेण वा शोध्यं धीधनैरितिदिक्

प्रार्थनेयं श्रीमद्वल्लभविजयमुनीशचरणचञ्चरीकस्य—

ललितविजयस्य मुनेः

वीरसंवत् २४४१ आत्मसंवत् २० विक्रमसंवत् १९७१

लिखितेयं प्रशस्तिका—

मोहमयीनगरोपान्तवर्त्तिनि वालुकेश्वरस्थले

भूवाँजिंग्रहकान्तिमन्निमितियुते वर्षे गते विक्रमात्, स्थित्वा मोहनिकेतने पुरवरे स्मृत्वा हृदि नाभिजम्।
मोहावेशनरेशदण्डदलने यश्चक्रिचक्रायते, तस्मिन्न्यायविशारदस्य ग्रन्थे ललितः प्रशस्तीं व्यधात् ॥ १ ॥

१५—७—१५

श्रीमद्विजयकमलसूरिप्राज्ये साम्राज्ये प्रवर्त्तमाने

---

१ मोहमय्यां.

# ॥ शास्त्रान्तर्गतविषयप्रतिपादनम् शास्त्राऽनुक्रमणिकाच ॥

युष्माकम् संगमोऽनादि बंधवोऽनियतात्मनाम्। ध्रुवैकरूपान् शीलादिबंधूनित्यधुनाश्रये ॥ २॥ युग्मम्॥

यह श्लोक मूलका है, इसकी टीका २९ में पत्र पर है, इसकों "संयमात्मा० इस श्लोकके साथ युग्मकरके वांचना,—

"संयमात्मा० इसश्लोककी और युष्माकं० इसकी टीका एकठी है—

अर्हम् ।

श्रीमद्विजयानन्दसूरीश्वरपादपद्मेभ्यो नमः ।

न्यायविशारद–न्यायाचार्य–श्रीमद्–यशोविजयोपाध्यायविरचितं

# श्रीज्ञानसारसूत्रम् ।

( श्रीमद्देवचन्द्रयतिपतिकृत–ज्ञानमञ्जरी–वृत्तियुक्तम् । )

## अथ पूर्णाष्टकम् ॥ १ ॥

श्रीपार्श्वेशं जिनं नत्वा, शुद्धं स्याद्वादसंयुतम् । आत्मानंदविशुद्ध्यर्थं, ज्ञानसारं प्रतन्यते ॥ १ ॥

परोपकारप्रवणा मुनीशाः, पूर्वं बभूवुर्गुणरोहणेशाः ।
तेषां सुवाक्यामृतपानपीनः, करोमि टीकां स्वहितां सुबोधाम् ॥ २ ॥

नास्तीह लोकेऽह्युपकारयोग्यो, मत्तोऽपि संसारविघातधीरः ।
तथात्मबोधाय तनोमि टीकां, भाष्यादिशास्त्रार्थकृतावलंबः ॥ ३ ॥

**ऐंद्रश्रीसुखमग्नेन, लीलालग्नमिवाखिलम् । सच्चिदानंदपूर्णेन, पूर्णं जगदवेक्ष्यते ॥ १ ॥**

इह शिष्टाचारपरिपालनाय, मंगलादि वाच्यम्—तच्च, शुद्धात्मस्वरूपनिरूपणपटिष्ठत्वात् सर्व एव ग्रन्थो मंगलं, तथापि—ग्रंथाव्युच्छित्तिसुखावबोधाय शिष्यमतिविकाशार्थं च पंचमंगलबीजभूतं श्रीमन्मुनिराजादिपंचपदस्मरणरूपं मंगलमाविष्कृतं । गुणस्तवनध्वनि—अंजलीकरणयोगाह्लादादिकारणोत्पन्नात्मीयगुणे । अर्हदादिबहुमानैकत्वरूपभावमंगलात्मकं कर्त्तुं विद्यासिद्धिबीजं, 'ऐं' इतिस्मरणरूपमंगलात्मकं च आद्यं पद्यं वक्ति ग्रंथकारः, ऐंद्रश्री इति । तेन मुनिना पाठकेन सूरिणा यथार्थक्षयोपशमोपयोगवता तथा—श्रीमदर्हता सिद्धपरमात्मना क्षायिकोपयोगवता न्यायसरस्वतीविरुदधरेण श्रीमद्यशोविजयोपाध्यायेन 'पूर्णं' सकलं जगत् अशुद्धपरसंयोगोत्पन्ननवनवपर्यायगमनशीलत्वात् 'लीलालग्नमिव' कल्पनाकल्पितक्रीडामुग्धमिव अवेक्ष्यते दृश्यते, इति संटंकः । इत्यनेन शुद्धामूर्त्तात्मानंदाऽनुभवलग्नाः परानुभवमग्नान् मूढत्वेनैव पश्यंति, नच परवस्तुनि किंचिद् भोग्यत्वमस्ति, वस्तुवृत्त्या स्वीयगुणपर्यायानुभव एव युक्त इति । अतः परस्वरूपमग्ना मुग्धा इति तात्पर्यं, तेन कथंभूतेन ? ऐंद्रश्रीसुखमग्नेन इन्द्रो जीवः तस्य इयं ऐंद्री च या श्रीश्च ऐंद्रश्रीः आत्मगुणलक्ष्मीः तस्याः सुखं आनंदः तत्र मग्नेन एकत्वा(व)स्थाऽऽपन्नेन, पुनः सत् शुभं शाश्वतं वा चित् ज्ञानं तस्य य आनंदः तत्र पूर्णेन ज्ञानानंदभृतेन मुनिना जगत् मिथ्यात्वासंयममग्नं मूढं विलोक्यते पूर्णाः अपूर्णं जगत् भ्रांतं जानंति इति अतः पूर्णानंदात्मस्मरणेन स्वीयः पूर्णानंदः साध्य इति ॥ १ ॥

अथ पूर्णत्वं वस्तुनो निरूपयति ।

**पूर्णता या परोपाधेः, सा याचितकमंडनम् । या तु स्वाभाविकी सैव, जात्यरत्नविभानिभा ॥ २ ॥**

पूर्णता इति । पूर्णता परोपाधेः पुद्गलसंयोगजन्यतनुधनस्वजनयशःख्यात्यादिरूपायाः या पूर्णता चक्रिशक्रादीनामिव सा याचितकमंडनं मार्गिताभरणशोभा तेन इभ्यत्वं, यद् जगज्जीवैरनंतशो भुक्त्वोच्छिष्टं आत्मनः अशुद्धताहेतुः तद्योगे स्वरूपानुभवभ्रष्टानां शोभा न, तत्त्वरसिकानां तु—पुनः या स्वाभाविकी स्वभावोत्था दर्शनज्ञानचारित्राद्यात्मका सकलात्मस्वभावाविर्भावरूपा शोभा सा एव शोभा जात्यरत्नविभानिभा, जात्यरत्नस्य विभा कांतिः तत्तुल्या, या हि—पुद्गलादिपरोपाधिजन्या सा तु स्फटिकोपलपुटिकावर्णिकातुल्या, या तु—स्वभावोत्पन्ना सा तु जात्यमाणिक्यकांतितुल्या, अतः स्वीयशुद्धसहजपूर्णता रुचिभासनरमणतया भवितव्यम् इति गाथार्थः ॥ २ ॥

**अवास्तवी विकल्पैः स्या—त्पूर्णताऽब्धेरिवोर्मिभिः । पूर्णानंदस्तु भगवां—स्तिमितोदधिसंनिभः ॥ ३ ॥**

अवास्तवी, इति । वस्तुः पदार्थः, तस्य इयं वास्तवी, न वास्तवी ' अवास्तवी,' परसंयोगोद्भवा, रागद्वेषमोहादिजैः विकल्पैः पूर्णता, अब्धेः समुद्रस्य ऊर्मिभिः इव स्यात् । यथा—ऊर्मिभिः समुद्रः अग्राह्यो, अनवगाह्यश्च भवति । तथाऽत्मापि रागद्वेषोर्मिभिः अग्राह्यो, अनवगाह्यश्च भवति । 'तु' पुनः—'पूर्णानंदः' आत्मीयानंतसंपदास्वादरूप, निष्पन्नपरमात्मावस्थारूपः । भगवान् परमैश्वर्यरूपः स्तिमितोदधिः स्थिरोदधिः तेन संनिभः सदृश इति । अतः चलत्वं विहाय अचलतया भवितव्यं, आत्मा आत्मस्वभावस्थः निर्विकल्पो भवति तत्साधनाय यतितव्यमित्यर्थः ॥ ३ ॥

**जागर्ति ज्ञानदृष्टिश्चेत् तृष्णाकृष्णाहिजांगुली। पूर्णानंदस्य तत्किंस्या—दैन्यवृश्चिकवेदना ? ॥ ४ ॥**

जागर्ति, इति। चेत् यदि 'ज्ञानदृष्टिः' तत्त्वज्ञानरूपा दृष्टिः चक्षुः जागर्त्ति, विकाशरूपा प्रवर्त्तते, 'तस्य पूर्णानन्दस्य' स्वरूपाविर्भावचिदानन्दयुक्तस्य भगवतः 'दैन्यं दीनता' तद्रूपा वृश्चिकवेदना किं स्यात् ? अपितु—न स्यात् दैन्यं नूनं तस्य न भवति स्वीयसहजाप्रयासानन्दस्य पूर्णतैव भवति। कथम्भूता ज्ञानदृष्टिः ? 'तृष्णाकृष्णाहिजांगुली,' तृष्णा पुद्गलभोगपिपासा, सा एव कृष्णाहिः कृष्णसर्पः। तद्दमने जांगुली गारुडमंत्रविशेषः इति। अत्र भावना—संसारचक्र-क्रोडगतस्य जंतोः स्वीयासंख्येयप्रदेशव्याप्तज्ञानादिगुणास्वादच्युतस्य पौद्गलिकभोगपिपासासर्पदष्टस्य स्वपरविवेकरूप-ज्ञानदृष्टिजांगुलीस्मरणेन परतृष्णानिर्विषस्य शुद्धस्वरूपैकत्वतत्वध्यानमग्नस्य निष्पन्नक्षायिकभावानंदस्य पूर्णस्य नास्ति दीनता, यतोहि अविरतसम्यग्दृष्टिः तत्त्वश्रद्धायुक्त आत्मानं आत्मतया परं च परतया, निर्धार्य्य, विचरन् तृष्णा-तुरो न भवति तर्हि किं पूर्णानंदमग्नानां ? इति गाथार्थः ॥ ४ ॥

**पूर्यन्ते येन कृपणास्तदुपेक्षैव पूर्णता। पूर्णानंदसुधास्निग्धा, दृष्टिरेषा मनीषिणाम् ॥ ५ ॥**

पूर्यंत, इति 'येन' परसंयोगेन धनधान्यादिना 'कृपणाः' लोभमग्नाः आत्मधर्मसंपद्विकलाः परास्वादनरसिकत्वेनात्मानं धन्यं मन्यमानाः, वस्तुधर्मे धीरताशून्याः 'पूर्यंते' प्रचुरा भवंति सा 'पूर्णता' उपाधिजा 'उपेक्षा एव' अनंगीकारयोग्या एव। अथवा तदुपेक्षा एव नहि एषा पूर्णता किं तु पूर्णतात्वेन उपेक्षते आरोप्यते इत्यर्थः। यथाहि—घटः जलेनापूर्णवहि-स्निग्धजमलेन पूर्णः केनचिदुच्यते मलपूर्णोऽयं घटः, एषा मलजा पूर्णता, सा किं पूर्णकुंभत्वावस्थां लभते नैवेति एवं

आत्मानंतज्ञानानंदादिस्वरूपापूर्णस्य कर्मोपाधिजा पूर्णता सा किं तत्त्वभोगपूर्णैः पूर्णत्वेनैव अंगीक्रियते नैवेति। एवं ज्ञात्वा उपेक्षा एव। अतएव अनादिस्वरूपभ्रष्टानां परोपाधिजा पूर्णता तन्मयत्वेन अभेदपरिणत्या प्रवर्त्तमानत्वात्, निर्विकल्पायां तु सम्यग् दर्शनज्ञानचारित्रभेदरत्नत्रयीरूपा पूर्णता स्वाभाविकी अपि अभिनवाभ्यासतः सविकल्पा क्षयमाणत्वात् अभेदरत्नत्रयीपरिणतानां स्वाभाविकी पूर्णता निर्विकल्पा भवति, तत्साध्यत्वेन तत्त्वसाधनरसिकतया भवितव्यं इति। उपदेशः 'मनीषिणां' पंडितानां शुद्धश्रद्धानभासनपूर्वकत्वरमणानुगवीर्यप्रवृत्तिव(म)तां 'पूर्णानंदसुधा त्रया' स्निग्धा 'दृष्टि'र्भवति। पूर्णः अन्यूनः य आनंदः 'पूर्णानंदः पूर्णानंद एव सुधा पूर्णानंदसुधा' तया स्निग्धा दृष्टिः 'एषा' भवति इति संबंधः। स्वरूपस्वाभाविकपूर्णात्मीयात्यंतैकांतिकनिर्द्वंद्वानंदस्निग्धा दृष्टिः तत्त्वज्ञानवतां भवति। आत्मज्ञानिनः स्वरूपानंदपूर्णतां एव पूर्णत्वेन मन्यंते इति न तत्र पौद्गली पूर्णतासंकल्पः, उपाधित्वेन निर्धारात् इति गाथार्थः ॥ ५ ॥

**अपूर्णः पूर्णतामेति पूर्यमाणस्तु हीयते। पूर्णानंदस्वभावोऽयं जगदद्भुतदायकः ॥ ६ ॥**

अपूर्णः इति। यः त्यागपरिणत्या सकलपुद्गलपरित्यागरुचिः पुद्गलैः 'अपूर्णः' साधकात्मगुणैः 'पूर्णतां' प्रति प्राप्नोति तु पुनः 'पूर्यमाणः' पुद्गलैः 'हीयते' पूर्णानंदेन पुद्गलैः पूर्यमाणस्य आत्मानंदे हीयते एव। 'अयं' ज्ञानगोचरीभूतः 'पूर्णानंदस्वभावः 'जगदद्भुतदायकः' अस्ति इति। पूर्णानंदस्वभावस्य इयं अद्भुतता, परसंगत्यागे वृद्धिः, परभावपूरणे हानिः। अत्र भावना—आत्मनः सकलस्वरूपाविर्भावानुभावोत्पन्नानंदः, जगति—लोके अनादिप्रवृत्तिप्रवृत्ते पुद्गलानंदभोक्तरि विस्मयरूपः। शुद्धतत्त्वपूर्णानां तु स्वरूपत्वात् न विस्मयः। अत एव पूर्णानंदसाधनभूते विशुद्धसम्यग्रत्नत्रयसाधने यत्नो

विधेय इति गाथार्थः ॥ ६ ॥

**परस्वत्वकृतोन्माथा, भूनाथा न्यूनतेक्षिणः । स्वस्वत्वसुखपूर्णस्य, न्यूनता न हरेरपि ॥ ७ ॥**

परस्वत्वेति । परे–परवस्तुनि संगांगिभावजविभावपरिणतौ स्वस्य भावः–स्वत्वं, परे स्वत्वं–परस्वत्वं तेन कृत उन्माथ-उन्मादः, व्याकुलत्वं, येषां ते 'परस्वत्वकृतोन्माथाः' एवंभूता 'भूनाथाः' पृथ्वीशाः अपि, न्यूनतेक्षिणः न्यूनतादर्शनशीलाः यतः परसंपद्रक्तानां चिंतामण्यनंतकोटिप्राप्तौ अपि न तृप्तिः, तृष्णाया अनंतगुणत्वात् सदैवापूर्णत्वात् न्यूनतामेव पश्यंति। तृष्णाया विभावत्वात्, परित्यागे सुखं । स्वशब्देन आत्मा तत्रैव स्वत्वं 'स्वस्वत्वं' तदुत्पन्नसुखं आत्मस्वभावनिर्धारभासन-रमणानुभवरूपं 'सुखं' तेन पूर्णस्य मुनेः, 'हरेरपि' इंद्रादपि 'न न्यूनता' यतः इंद्रादीनां शुभाशुभाध्यवसायनिवद्धपुण्यविपाक-भोगिनां आत्मगुणानुभावशून्यानां दीनत्वमेव विलोक्यते तत्त्वरसिकैः । स्वरूपसुखलेशोऽपि जीवनं परमामृतं पुण्योदयोद्भवसुखकोटिरपि स्वगुणावरणत्वेन महद्दुःखं अहह वंधसत्तातोऽपि उदयकालः दारुणः, येनात्मनः गुणावरणता । अतः स्वरूपसुखे रुचिः कार्या ॥ ७ ॥

**कृष्णे पक्षे परिक्षीणे, शुक्ले च समुदंचति । द्योतते सकलाध्यक्षा पूर्णानंदविधोः कला ॥ ८ ॥**

कृष्णे पक्षे इति । 'कृष्णे पक्षे परिक्षीणे' क्षयं प्राप्ते 'शुक्ले' पक्षे 'समुदंचति' उदयं प्राप्तवति सति सकलाध्यक्षा सकलजनप्रत्यक्षा 'विधोः' चंद्रस्य 'कला द्योतते' इति लोकप्रवृत्तिः । एवं कृष्णे पक्षे अर्धपुद्गलाधिकसंसाररूपे क्षीणे सति, शुक्लपक्षे अर्द्धपुद्गलाभ्यंतरसंसाररूपे प्रवर्तमाने सति, पूर्णानंद आत्मा, स एव विधुश्चंद्रस्तस्य कला–स्वरूपानुयायिचैतन्य-

पर्यायप्राग्भावरूपा 'द्योतते' शोभते इत्यर्थः । शुक्लपक्षे प्रासे आत्मनि चेतनापर्यायः शोभते, कृष्णपक्षे हि अनादिक्षयोपशमीभूतचेतनावीर्यादिपरिणामः, मिथ्यात्वासंयमैकत्वेन संसारहेतुत्वात् न शोभते इति । अस्य हि आत्मनः स्वरूपसाधनावस्था एव प्रशस्या । कृष्णपक्षशुक्लपक्षलक्षणं तु—

"जेसिमवड्ढपुग्गलपरिअट्टो सेसओ अ संसारो । ते सुक्कपक्खिया खलु अवरे पुण किण्णपक्खीया" ॥ १ ॥

"जो किरिआवाई सो भव्वो णियमा सुक्कपक्खीओ । अंतो पुग्गलपरिअट्टस्स उसिज्झइ नियमा"

इति दशाश्रुतस्कंधचूर्णौ

पूर्ण इति गुणत्वात् गुणिनमंतरेण न भवति पूर्णत्वं वस्तुनि स्वरूपसिद्धौ भवति । तत्र नाम पूर्णः 'पूर्णः' इति कस्यचित् नाम शब्दालापरूपं, पूर्णस्य आकार आरोपो वा स्थाप्यते, सा स्थापना, पूर्णघटत्वादिरूपा स्थापनापूर्णः, द्रव्यपूर्णः, द्रव्येण पूर्णः धनाढ्यो जलादिपूर्ण घटादिर्वा, द्रव्यात् पूर्णः स्वकार्यपूर्णः, 'अर्थक्रियाकारि द्रव्यं' इति लक्षणात्, द्रव्येषु पूर्णः—धर्मास्तिकायस्कंधादिः, "अणुवओगोदवं" इति वचनात्, आगमतो द्रव्यं—पूर्णपदस्यार्थज्ञाता अनुपयुक्तः, नो आगमतः—ज्ञशरीरभव्यशरीरतद्व्यतिरिक्तभेदात् त्रिधा तत्र पूर्णपदज्ञकलेवरं ज्ञशरीरं, भावीपूर्णपदज्ञाता लघुशिष्यादि भव्यशरीरं, तद्व्यतिरिक्तस्तु सत्तया पूर्णः गुणादिभिः तथापि तत्प्रवृत्तिरहितः कर्मावृतः आत्मा अविवक्षितभावस्वभावः, उक्तं च श्रीशांतिवादिवेतालैः, नवरं तद्व्यतिरिक्तश्च जीवाद् भव्यजीव उच्यते इति प्रक्रमस्तु विशेषद्योतकः स चायं विशेषो यथा—न कदाचित्तत्पर्यायवियुक्तं द्रव्यं तथापि च, यदा च तद्वियुक्ततया विवक्ष्यते तदा तद्द्रव्य-

प्राधान्यतो द्रव्यजीवः भावपूर्णः आगमतः पूर्णपदार्थः समस्तोपयोगी, नो आगमतः ज्ञानादिगुणपूर्णः संग्रहेण सर्वे जीवा नैगमेनासन्नसिद्धिवंतो भव्याः पूर्णानंदाभिलापिणः, व्यवहारतः अभ्यासवंतो, ऋजुसूत्रेण तद्विकल्पवंतः, शब्दनयेन सम्यग्दर्शनादिसाधकगुणानंदपूर्णाः समभिरूढतः अर्हदाचार्योपाध्यायसाधवः स्वस्वभावसुखास्वादनेन भवोद्विग्नत्वात् एवंभूतः सिद्धः अनंतगुणानंदअव्याबाधानंदपूर्णत्वात् । अत्र हि–भावनिक्षेपसाध्यः, ततः एवं पूर्णानंदः साधनत्वेन गृहीतः इति । शुद्धसिद्धामलानंताकृत्रिमस्वरूपसकलस्वभावाविर्भावानुभवरूपः पूर्णानंदः साध्यः साधना तु या सम्यगात्मगुणास्वादानंदतया परिणमथ्य पूर्णानंदसाधना विधेया । इति व्याख्यातं पूर्णाष्टकम् ॥ १ ॥

## अथ द्वितीयं मग्नाष्टकम् ।

**प्रत्याहृत्येंद्रियव्यूहं समाधाय मनो निजम् । दधच्चिन्मात्रविश्रांतिर्मग्न इत्यभिधीयते ॥ १ ॥**

अथ मग्नाष्टकं वितन्यते–तत्र नामस्थापने सुगमे, द्रव्येण धनमदिरापानादिना मग्नः द्रव्यात् धनकांचनात् मग्नः द्रव्ये शरीरादौ मग्नः । अथवा द्रव्यरूपो मग्नो द्विधा, आगमतः मग्नपदार्थज्ञाता अनुपयुक्तः, नो आगमतो ज्ञशरीरभव्यशरीरे पूर्ववत्, तद्व्यतिरिक्तस्तु मूढः शून्यः जडः । भावमग्नो द्विविधः, अशुद्धः शुद्धश्चेति । तत्र अशुद्धः क्रोधादिमग्नः विभावभावितात्मा, शुद्धः द्विविधः, साधकः सिद्धश्च, तत्र साधकः वस्तुस्वरूपाभिमुखः आद्यनयचतुष्टये तु निरनुष्ठानदग्धादिदोपवर्जितविध्युपेतद्रव्यसाधनप्रवृत्तिपरिणतवस्तुस्वरूपसाधनरुचिवतः भवति । शब्दादिनयमग्नस्तु सम्यग्दर्शनज्ञानचारित्राद्यात्मसमाधिमग्नः संपूर्णवस्तुस्वरूपे निरावरणे मग्नः निष्पन्नः । अत्र हि गुणस्थानादिविशुद्धस्वस्वरूपानंदमग्नत्वमीक्ष्यते-

तत्र मग्नलक्षणं गदन्नाह—प्रत्याहृत्येंद्रिय इति । इंद्रियाणां स्पर्शनरसनघ्राणचक्षुःश्रोत्ररूपाणां, यो व्यूहः समूहस्तं प्रत्याहृत्य प्रत्याहारं कृत्वा, विषयसंसारतो निवार्य, "प्रत्याहारस्त्विद्रियाणां विषयेभ्यः समाहृतिः" इति वचनात् । निजं स्वीयं मन, चेतनावीर्यैकत्वविकल्परूपं समाधाय समाधौ स्थाप्य विषयनिरोधं आत्मद्रव्यैकाग्रतारूपं कृत्वा, "समाधिस्तु तदेवार्थमात्रामासनपूर्वकं आत्मस्वरूपभासनैकत्वरूप समाधिः, तत्र मनः कृत्वा, चिन्मात्रे ज्ञानमात्रे आत्मनि, मुख्यतः दर्शनज्ञानमय एव आत्मा, "उवउत्तो नाणदंसणगुणेहिं" इति वाक्यात् । ज्ञानस्वरूपे स्वद्रव्यं विश्रांतिं दधत् मग्न इति अभिधीयते कथ्यते, इत्यनेन अनादितः अयं जीवः पुद्गलस्कंधजवर्णगंधरसस्पर्शरसादिषु मनोज्ञेषु स्वजनादिषु च भ्रमन् विकल्पकोटिकोटिं प्राप्त इष्टान् विषयान्निच्छन् अनिष्टान् विषयान् अनिच्छन् वातोद्भूतशुष्कपलाशवत् भ्रमति । कदाचित् स्वपरविवेकरूपं भेदज्ञानं प्राप्य अनंतज्ञानदर्शनानंदमयं स्वीयं भावं स्वत्वतया निर्धार्य इदं विषयसंगादिकं न मम नाहं अस्य भोक्ता उपाधिरेव एष, नहि मम कर्त्तृत्वं भोक्तृत्वं ग्राहकत्वं च, परवस्तूनां मया हि स्वरूपभ्रष्टेनेदं विहितं, सांप्रतं जिनागमांजनेन जातस्वपरविवेकेन तेषु रमणास्वादनं न युक्तं इतिविचार्य स्वरूपानंतस्वभावगुणपर्यायस्याद्वादानंतात्मनि विश्रांतिं प्राप्तः, आत्मानंतानंदसंपन्नमयं ज्ञात्वा, परमात्मसत्तास्वरूपे मग्नः भवति, स मग्नः अभिधीयत इति ॥ १ ॥

य आत्मानुभवमग्नः स कीदृग् भवति तदाह—

**यस्य ज्ञानसुधासिंधौ, परब्रह्मणि मग्नता । विषयांतरसंचारस्तस्य हालाहलोपमः ॥ २ ॥**

यस्येति । यस्य जीवस्य अनादिविभावविरतस्य ज्ञानसुधासिंधौ परब्रह्मणि ज्ञानामृतसमुद्ररूपे परमात्मसमाधौ मग्नस्य

तस्य जीवस्य विषयांतरे वर्णगंधादौ संचारः प्रवर्त्तनं हालाहलोपमः महाविषभक्षणतुल्यः। यो हि अमृतस्वादमग्नः स विषम-विषं भोक्तुं कथं प्रवर्त्तते ? मालतीभोगमग्नः मधुकरः करीरादिषु न वसति एवं शुद्धनिःसंगनिरामयनिर्द्वंद्वस्वीयात्मज्योतिर्मग्नः अनंतजीवेष्टेषु स्वयं अनंतवारभुक्तमुक्तेषु, वस्तुतः अभोग्येषु स्वगुणावरणहेतुभूतेषु विषयेषु, तस्य मनः न संचरति न प्रवर्त्तते इति तत्त्वम् ॥ २ ॥

पुनस्तदेव द्योतयति—

**स्वभावसुखमग्नस्य, जगत्तत्त्वावलोकिनः। कर्त्तृत्वं नान्यभावानां, साक्षित्वमवशिष्यते ॥ ३ ॥**

स्वभावसुख० इति। 'स्वभावं' सहजं सुखं सहजात्यंतिकैकांतानंदं तत्र 'मग्नस्य' तन्मयस्य, 'जगत्' लोकः तस्य तत्त्वं तद्धर्मं, यथार्थतया विलोकिनः दर्शनशीलस्य पुरुषस्य, अन्यभावानां परभावानां रागादिविभावानां ज्ञानावरणादिकर्मणां बाह्यस्कंधादाननिक्षेपानां कर्त्तृत्वं न, किंतु ज्ञायकस्वभावत्वात्, साक्षित्वमेव, तत्र कर्त्तृत्वं एकाधिपत्ये क्रियाकारित्वं, तत्, जीवे जीवगुणानामेव, चेतनवीर्योपकरणकारकचक्रोपकरणेन। यतो हि एकाधिपत्यक्रियाशून्यत्वेन धर्मादिद्रव्येषु न कर्त्तृत्वं, जीवस्यापि कर्त्तृत्वं स्वकार्यस्य। नहि जीवः कोऽपि जगत्कर्त्ता, किंतु स्वकार्यपरिणामिकगुणपर्यायप्रवृत्तेरेव कर्त्ता न, परभावानां तु कर्त्तृत्वे असदारोपसिध्यभावादयो दोषाः, ज्ञातालोकालोकस्य, अत एव नायं परभावानां कर्त्ता, किंतु स्वभावमूढोशुद्धपरिणतिपरिणतः। अशुद्धनिश्चयेन रागादिविभावस्य, अशुद्धव्यवहारेण ज्ञानावरणादिकर्मणां कर्त्ता जातोऽपि स एव सहजसुखरुचिरनंताविनाशिस्वरूपसुखमयमात्मानं ज्ञात्वा। आत्मीयपरमानंदभोगी, न परभावानां कर्त्ता भवति, किंतु

ज्ञापक एव अत्र प्रस्तावना । अयं हि आत्मा स्वनिःसपत्नसंगांगितया स्वीयविशेषस्वभावानां सगुणकरणेन सत्प्रवृत्तिमतामपि स्वगुणकरणावरणेन ज्ञानचेतनावीर्यादिक्षयोपशमानां च परानुयायिनां तत्सहकारेण कर्तृत्वादिपरिणामानां परकर्त्तृत्वादिविभावपरिणमनेन परकर्त्तृत्वे जातेऽपि तेषामेव गुणानां स्वभावसन्मुखीभवने कर्त्तृत्वादीनां परावृत्तिः, तेन सम्यग्दर्शनज्ञानचारित्रपरिणतेः स्वरूपसाधनकर्तृत्वादि कुर्वन्, गुणकरणैः पूर्णैः साधनकर्त्तृत्वं विधाय गुणप्रवृत्तिरूपं शुद्धं कर्त्तृत्वादिकं करोति अतएव साधकानां सन्मुनीनां स्वरूपसन्मुखानां न परभावकर्त्तृत्वं इति, किंतु ज्ञायकत्वमेव। अत्र पक्षः। तर्हि मुनीनां परभावाकर्त्तृत्वे उक्ते हेतुद्वयजन्यकर्मकर्त्तृता कुतः ? तत्राह स्वस्वभावमग्नानां साधकमुनीनां अनभिसंधिजवीर्यतदनुगतचेतनता कर्मबंधकर्त्तृत्वमस्ति, तथापि स्वायत्ताभिगुणप्रवृत्तीनां स्वभावानुगतत्वात् अकर्त्तृत्वं अथवा—एवंभूतसिद्धत्वास्वादानंदमग्नानां तु न परभावकर्त्तृता। अथवा—सम्यग्दर्शनादिगुणाप्राप्तौ वस्तुस्वरूपविवरेणन स्वरूपानुगतस्वशक्तित्वेन आत्मनः परभावकर्त्तृत्वं नास्त्येव। ज्ञायकत्वमेवेति। अतः स्वरूपरसिकानां सर्वभावज्ञापकत्वं कर्त्तृत्वं स्वपरिणामिकभावस्य अतः स्वात्मानं एकांते निवेश्य, अनादिभ्रांतिजं परभावकर्त्तृत्वभोक्तृत्वग्राहकत्वादिकं निवारणीयं स्वरूपाखंडानंदकर्त्तृत्वादिकं करणीयं इति गाथार्थः ॥ ३ ॥

**परब्रह्मणि मग्नस्य, श्लथा पौद्गलिकी कथा । क्वामी चामीकरोन्मादाः, स्फारा दारादराः क्व च ॥ ४ ॥**

परब्रह्मणीति,। परब्रह्मणि परमात्मनि मग्नस्य तन्मयस्य स्वरूपावलोकनरमणरक्तस्य, पौद्गलिकी पुद्गलसंबंधिनी, कथा नाम वार्त्ता, 'श्लथा' शिथिला इत्यर्थः। परत्वेन अग्राह्यत्वेन अभोग्यत्वेन निर्धारात् यस्य कथापि श्लथा तस्य ग्रहः कुतो

भवति? अतएव अमी चामीकरोन्मादाः तस्य क? शुद्धात्मगुणसंपद्धतां चामीकरग्रहः एव न; परत्वात्; पापस्थानहेतुत्वात् कुत उन्मादः? च पुनः स्फारा देदीप्यमानाः दाराः वनिता तस्या आदराः क? इति कुतः, नैवेति। स्वभावसुखभोगिनां पौद्गलिकभोग एव न, तर्हि मोघा कुरागपटी अशुद्धविभावनटी दाराकटी तत्रादरः कथं भवति? नैवेति। इति गाथार्थः॥४॥

**तेजोलेश्याविवृद्धिर्या, साधोः पर्यायवृद्धितः। भाषिता भगवत्पादैः सेत्थंभूतस्य युज्यते ॥ ५ ॥**

तेजोलेश्या, इति। तेजोलेश्या चित्तसुखलाभलक्षणा ज्ञानानंदास्वादाश्लेषरूपा तस्याः विवृद्धिः विशेषतः वर्द्धना, साधोः निर्ग्रंथस्य, पर्यायवृद्धितः चारित्रपर्यायविवृद्धितः, भगवत्पादैः भाषिता उक्ता, भगवत्यादौ पंचमांगे सा निर्मलसुखास्वादरूपा, इत्थंभूतस्य आत्मज्ञानमग्नस्य रत्नत्रयैकत्वलीलामयस्य वाचंयमस्य युज्यते। घटते, नान्यस्य मंदसंवेगिनः। अत्र प्रस्तावना तत्र प्रथमं संयमस्वरूपमुच्यते–आत्मनि चारित्रनामगुणः अनंतपर्यायोपेतानंताविभागरूपः अस्ति। तथाच विशेषावश्यके-दानादिलब्धिपंचकं चारित्रं सिद्धस्यापि इच्छंति तदावरणस्य तत्राप्यभावात्, आवरणाभावे च तदसत्वे क्षीणमोहादिष्वपि तदसत्वप्रसंगात् ततस्तन्मते चारित्रादीनां सिद्धावस्थायां सद्भावः। चारित्रं च चारित्रमोहावृतं तच्च तत्त्वश्रद्धासम्यग्-ज्ञानपूर्णानंदेहाविर्भावपश्चात्तापादिक्षयोपशमावस्थागतं च चारित्रमोहपुद्गलेषु उदयप्राप्तेषु भुक्तेषु अनुदितेषु विष्कं-भितेषु केषांचित् प्रदेशभोगितां नीतेषु चारित्रगुणविभागानां आविर्भावो भवति, तत्र सर्वजघन्यसंयमस्थाने सर्वाकाश-प्रदेशानंतगुणतुल्यचारित्रपर्यायप्राग्भावः प्रथमं संयमस्थानं।

"ते कित्तिया पएसा? सव्वागासस्स मग्गणहोइ। ते तित्तिया पएसा अविभागाउ अनंत गुणा ॥ १ ॥

प्रथमं संयमस्थानं सर्वोत्कृष्टदेशविरतिविशुद्धस्थानतः अनंतगुणविशुद्धं, द्वितीयं संयमस्थानं प्रथमस्थानात् अनंततमे भागे यावंतः अविभागाः तावंतः अविभागवृद्धौ भवन्ति, एवं तृतीयं, एवं चतुर्थं, एवं अनंतभागवृद्ध्या अंगुलमात्राकाशक्षेत्रस्य अंगुलासंख्यभागाकाशप्रदेशप्रमाणसमानि स्थानानि भवंति, इदं प्रथमं कंडकं । ततः परं असंख्यातभागवृद्धिरूपं द्वितीयं कंडकं। प्रथमं संयमस्थानं प्रथमं कंडकं। चरमसंयमस्थाने तावंतो विभागाः तेषां असंख्याततमे भागे यावंतः अविभागास्तावंतोऽधिकाः क्षयोपशमा भवंति, तद्द्वितीये कंडके प्रथमं संयमस्थानं, ततः असंख्येयानि स्थानानि अनंतभागवृद्धिरूपाणि असंख्यभागप्रदेशराशिप्रमाणानि द्वितीयं कंडकं । ततः परं एकं असंख्यातभागवृद्धिरूपं पुनः असंख्येयानि अनंतभागवृद्धिरूपाणि तृतीयं कंडकं । ततः एक असंख्यातवृद्धिरूपं एवं अनंतभागांतरितांगुलासंख्येयभागमात्रं असंख्यभागवृद्धिरूपं अंगुलासंख्येयभागकंडकमानस्थानरूपं द्वितीयं स्थानं । ततः संख्यातभागवृद्धिरूपं प्रथमं संयमस्थानं। ततः पुनः अंनंतभागवृद्धिरूपाणि असंख्येयानि, ततः पुनः एकं असंख्यभागवृद्धिरूपं ततः असंख्येयानि अनंतभागवृद्धिरूपाणि एवं अंगुलमात्रक्षेत्रासंख्यभागप्रदेशमानकंडकेषु गतेषु एकं संख्यातभागवृद्धिरूपं स्थानं, एवं अंगुलासंख्येयभागतुल्यानि संख्येयभागवृद्धिस्थानानि गतानि एवं संख्यातगुणवृद्धि—असंख्यातगुणवृद्धि—अनंतगुणवृद्धिरूपाणि असंख्येयानि संयमस्थानानि भवंति । ततः परं स्थानमसंख्येयगुणसंयमस्थानमानं भवति । एकांतरं तानि असंख्येयानि अनंतभागवृद्धिरूपाणि संयमस्थानानि भवंति । सर्वसंयमस्थानसंख्या लोकसमानाः अलोके असंख्येयालोकाकाशाः कल्प्यंते, तावत्प्रदेशराशितुल्यानि संयमस्थानानि भवन्ति उत्तरोत्तरनिर्मलानि । आदितः अनुक्रमसंयमस्थानारोही नियमात् शिव-

पदं लभ्यते । प्रथमं एव उत्कृष्टमध्यमसंयमस्थानारोही नियमात् पतति । एवं प्रथमस्थानतः अनुक्रमेण संयमक्षयोपशमी तस्य चारित्रपर्यायनिर्मलत्वेन चारित्रसुखस्वरूपं भगवतीवाक्यं आलापश्च भगवत्यां—"जे इमे अज्जत्ताए समणा निग्गंथा विहरंति ए एण कस्स तेउल्लेसं वितीवयंति ? गोयमा ! मासपरियाए समणे निग्गंथे वाणमंतराणं देवाणं ते उल्लेसं वितीवयंति । दुमासपरिआए समणे णिग्गंथे असुरिंदवज्जि आणं भवणवासीणं तेउल्लेसं वितीनयंति । एएणं अभिलावेणं तिमासपरिआए समणे निग्गंथे असुरकुमाराणं देवाणं तेऊलेसं वितीवयंति । चउमासपरिआए गहगणणक्खत्ततारारूवाणं जोइसिआणं तेयं । पंचमासपरिआए चंदिमसूरियाणं जोइसियाण तेउलेसं । छम्मासपरिआए सोहम्मीसाणाणं तेउ । सत्तमासपरिआएसणंकुमारमाहिंदाणं । अट्ठमासपरिआए बंभलोगाणंलंतगाणं तेउलेसं । णवमासपरिआए महासुक्कसहस्साराणं देवाणं । दसमासपरिआए आणय–पाणय आरणच्चूयाणं देवाणं । इक्कारसमासपरिआए गेविज्जविमाणाणं देवाणं । बारमासपरिआए समणे निग्गंथे अणुत्तरोववाइयाणं देवाणं तेउलेसं वितीवयंति, तेणे परं सुक्के सुक्काभिजाइए भवइ । तउ पच्छासिज्झति । जावअंतं करेति । सेवं भंते ! टीकायां लेश्याप्रक्रमादिदमाह–'जेइमे इत्यादि, ये इमे प्रत्यक्षा 'अज्जत्ताएत्ति, आर्यतया पापकर्मबहिर्भूततया, अद्यतया अधुनातनतया, वर्त्तमानकालतया इत्यर्थः । 'तेउलेसंति' तेजो लेश्या सुखासिका, तेजोलेश्या हि प्रशस्तलेश्योपलक्षणं, सा च—सुखासिका हेतुरिति कारणे कार्योपचारात् तेजोलेश्याशब्देन सुखासिका विवक्षते, 'वतीईवयंति' व्यति व्रजंति व्यतिक्रामंति । 'असुरिंदवज्जियाणंति' चमरवलिवर्जितानां तेणपरं' ततः परं, ततः संवत्सरात्परतः, 'सुक्केति' शुक्लोनामाभिन्नवृत्तोऽमत्सरी, कृतज्ञः, सदारंभी, हितानुबंधी, निर,

तिचारचरण इत्यन्ये, सुक्काभिजातित्ति शुक्काभिजात्यं परमशुक्कमित्यर्थः, अत एवोक्तं आकिंचन्यं, मुख्यं ब्रह्मातिपरं, सदागमं विशुद्धं सर्वशुक्कमिदं खलु नियमात्, संवत्सदूर्द्ध, एतच्च श्रमणविशेषमेवाश्रित्योच्यते, न पुनः सर्व एवंविधो भवति, अत्र मासपर्यायेति । संयमश्रेणिगतसंयमस्थानानां मासादिपर्यायगतसंयमभावोल्लंघनेन तत्प्रमाणसंयमस्थानोल्लंघी मुनिर्ग्राह्यः इति । अत्र परंपरासंप्रदायः, जघन्यतः उत्कृष्टं यावत् असंख्येयलोकाकाशप्रमाणेषु संयमस्थानेषु क्रमाक्रमवर्त्तिनिर्ग्रंथेषु मासतः द्वादशमाससंयमप्रमाणसंयमस्थानोल्लंघनोपरितने वर्त्तमानः साधुरीदृग्देवतातुल्यं सुखं अतिक्रम्य वर्त्तते इति ज्ञेयं । उक्तंच—

"मासादिपर्यायवृद्ध्या द्वादशभिः परं तेजः । प्राप्नोति चारित्री सर्वदेवेभ्य उत्तमम् ॥ १ ॥"

धर्मविदस्तेजस्विनः सुखलाभक्षणं वृत्तौ इत्येवं आत्मसुखवृद्धिः आत्मज्ञानमग्नस्य भवति ॥ ५ ॥

ज्ञानमग्नस्य यच्छर्म, तद्वक्तुं नैव शक्यते । नोपमेयं प्रियाश्लेषैर्नापि तच्चंदनद्रवैः ॥ ६ ॥

व्या०—ज्ञानमग्नस्येति 'ज्ञानमग्नस्य, आत्मसुखोपलब्धियुक्तस्य, 'यत् शर्म, सुखं, स्पर्शज्ञानानुभवानंदं तत् वक्तुं नैव शक्यते, अतींद्रियत्वात् वागगोचरत्वात्, तद् अध्यात्मसुखं प्रिया० मनोज्ञेष्टवनिता तस्या 'आश्लेषैः, आलिंगनैः तथा चंदनद्रवैः चंदनविलेपनैर्नोपमीयते । यतः स्रक्चंदनादिजं सुखं वस्तुतः न सुखं, आत्मसुखभ्रष्टैः सुखबुध्या आरोपितं, लोके पुद्गलसंयोगजं आरोपसुखं जात्या दुःखमेव । उक्तं च विशेषावश्यके—

"जत्तोच्चिअपच्चक्खं, सोम्मसुहं नत्थि दुक्खमेवेदं । तप्पडियारविभत्तं, सो(तो)पुण फलंति दुक्खंति ॥ १ ॥
विसयसुहं दुक्खं चिय दुक्खप्पडियार उत्तिगुबुव । तं सुंदरमुवयारा, उनमुवयारो विणा तच्चं ॥ २ ॥
साया सायं दुक्खं, तविरहंम्मिय सुहंजओ तेणं । देहेंदि ए सुदुक्ख सुक्खं देहिंदियाभावे ॥ ३ ॥

उक्तं च—

यं वाक्यमात्रमवसादयति प्रतिष्ठा क्लिश्नाति लब्धपरिपालनदृष्टिरेव ।
नातिश्रमापगमनाय यथा श्रमाय राज्यं स्वहस्तधृतदंडमिवातपत्रम् ॥ १ ॥ इति ॥

तस्मात् संसारः सर्वदुःखरूप एव । स्वाभाविकानंद एव सुखं, यावत् इंद्रियसुखे सुखबुद्धिः तावत् सम्यग्दर्शनज्ञाने न मग्नः, इति तत्तार्थवृत्तौ, अतः अध्यात्मसुखं पुद्गलाऽऽश्लेषजसुखेन नोपमीयते ॥ ६ ॥

शमशैत्यपुषो यस्य, विप्रुषोऽपि महाकथा । किं स्तुमो ज्ञानपीयूषे, तत्र सर्वांगमग्नता ? ॥ ७ ॥

व्या०—'शमशैत्यपुष इति, शमः उपशमः रागद्वेषाभावः, तत्त्वास्वादकत्वं आत्मनि निर्धार्य इष्टानिष्टे वस्तुनि रागादीनां शांतिः, नहि रागादयो वस्तुपरिणामाः, किन्तु विभावजा, अशुद्धा भ्रांतिपरिणतिः, नहि पुद्गलादीनां शुभाशुभपरिणतिः कस्यापि जीवस्य निमित्ता, किन्तु पूर्णगलनपारिणामिकत्वेन । अथ वर्णादिकर्मविपाकाद्वा तत्र रागद्वेकृता तु भ्रांतिरेव । उक्तंच—

कणगो लोहो न भणइ, रागो दोसो कुणंतु मज्झनुमं । नियतत्तविलुत्ताणं, एस अणाई अपरिणामो ॥ १ ॥

स्वरूपस्य स्वायत्तत्वात् स्वभोग्यत्वात् परवस्तुसंयोगवियोगाभ्यामिष्टानिष्टतोपाधिः । एवं शमस्य शैत्यं शीतलत्वं अतसत्वं, तस्य 'पुषः' पोषकस्य यस्य पुरुषस्य शमशैत्यपुषः विप्रुषः बिंदुमात्रस्यापि महाकथा महावार्त्ता, शमशैत्यबिंदुरपि दुर्लभः यस्य ज्ञानपीयूषे तत्त्वज्ञानामृते सर्वांगमग्नता तत्र तस्मिन् स्थाने किं स्तुमः किं वर्णयामः ? तस्य वर्णनं कर्त्तुं असमर्था वयमिति । योहि स्वरूपज्ञानानुभवः सः अतिप्रशस्यः । उक्तं च—

"लब्भइ सुरसामित्तं लब्भइ पहुअत्तणं न संदेहो । इक्को नवरि न लब्भइ, जिणंदवरदेसिओ धम्मो ॥ १ ॥
धम्मोपवित्तिरूवो, लब्भइ कइयाविनिरयदुक्खभया । जो नियवत्थुसहावो, सो धम्मो दुलहो लोए ॥ २ ॥
निअवत्थुधम्मसवणं, दुलहं वुत्तं जिणिंदिआणसुहं । तप्फासणमेगत्तं, हुंति केसिं च धीराणं ॥ ३ ॥

अतः वस्तुस्वरूपधर्मस्पर्शनेन परमशीतीभूतानां परमपूज्यत्वमेव ॥ ७ ॥

यस्य दृष्टिः कृपावृष्टिः, गिरः शमसुधाकिरः । तस्मै नमः शुभज्ञानध्यानमग्नाय योगिने ॥ ८ ॥

इति द्वितीयं मग्नाष्टकम् ।

व्या०—'यस्येति' तस्मै शुभज्ञानध्यानमग्नाय योगिने नमः, शुभं नाम शुद्धं यथार्थपरिच्छेदनं, भेदज्ञानविभक्तस्वपरत्वेन स्वस्वरूपैकत्वानुभवः, तन्मयत्वं ध्यानं तत्र मग्नाय, तस्मै योगिने मनोवाक्कायरोधकाय, रत्नत्रयाभ्यासशुद्धसाध्य-

संसाधकाय, नमः । कस्य यस्य दृष्टिः कृपावृष्टिः परमकरुणावर्षिणी, यस्य गिरः वाचां समूहः शमसुधाकिरः क्रोधादिपत्यागः शमः, स एव सुधा अमृतं, तस्याः किरः किरणं सेचनं । (यस्य) तच्छीला दृष्टिः कृपामयी वाक् शमतामृतमयी, तस्मै योगिने नमः इति अत्र भावना—अनादिमिथ्यात्वासंयमकषाययोगचापल्यविध्वस्तात्मस्वभावानां, इष्टानिष्टपरभावग्रहणाग्रहणरसिकत्वेन तत्प्राप्त्यप्राप्तौ रत्यरतिअशुद्धाध्यवसायमग्नानां, जीवानां कुतः स्वरूपमग्नता, अतः शंकाद्यतिचारवियुक्तावाप्तदर्शनो हि जीवः, शुद्धाशयः, त्रिभुवनमप्युपहतमोहमहेंधनज्वलितकर्मदहनक्वथ्यमानमशरणमवलोक्य गुणावरणाद्दुःखोद्विग्नः, निर्धारिततत्त्वश्रद्धानः, आश्रवनिवृत्तिसंवरैकत्वप्रतिज्ञामारुह्य दृढीकरणार्थं, पंचविंशतिभावना भावितांतरात्मा, द्वादशानुप्रेक्षास्थिरीकृताध्यवसायः, पूर्वकर्मनिर्जराभिनवाग्रहणाविर्भावभूतस्वरूपसंपदानुभवमग्नाः सुखिनः, अत एवागमश्रवणविभावविरतितत्त्वावलोकनतत्त्वैकाग्रतादि-उपायैः स्वरूपानुभवमग्नत्वं एव कार्यं, संसारे कर्मक्लेशसततत्वमवगम्य संसारोद्विग्नेन विरागमार्गानुगप्रवर्त्तिना आत्मस्वरूपाविर्भावहेतुषु सम्यग्दर्शनज्ञानचारित्रेषु वर्त्तितव्यमित्यर्थः ॥८॥

॥ इति व्याख्यातं मग्नाष्टकम् ॥

## ॥ अथ तृतीयं स्थिरताष्टकम् ॥

अथ मग्नत्वं स्थिरतया भवति, अतः स्थिरताष्टकं प्रदर्श्यते, तत्र धर्मास्तिकायादीनां त्रयाणां स्थिरता अक्रियत्वात्, पुद्गलानां स्थिरता स्कंधादिनिबद्धा, सा तु न साधनहेतुः, अत्र नांगीकृता, यातु वस्तुवृत्त्या स्थिरस्य, परोपाधितःचलीभूतस्य, सम्यग्दर्शनादिगुणावाप्तौ परभावादिष्वगमनरूपा आत्मनः स्थिरता प्रतन्यते, तत्र नामस्थापना सुगमा, द्रव्यतः योग-

चेष्टारोधरूपा, द्रव्ये स्थिरता मंमणवत्, द्रव्येण स्थिरता रोगादिसंभवा, द्रव्यरूपा स्थिरता द्रव्यस्थिरता, आगमतः नोआगमतः, आगमतः स्थिरतापदार्थज्ञस्य अनुपयुक्तस्य, नो आगमतः स्वरूपोपयोगशून्यस्य साध्यविकलस्य, प्राणायामादिषु कायोत्सर्गादिर्वा द्रव्यस्थिरता। भावतः द्विविधा अशुद्धा रागद्वेषमनोज्ञविषयेषु तन्मयत्वेन एकता, शुद्धा च सम्यग्दर्शनज्ञानचारित्रादिस्वरूपे तन्मयत्वरूपा, धर्मध्यानशुक्लध्यानादिषु अचलताभावस्थिरता, शुद्धसाध्यशून्यायोगादीनां स्थिरता सा दुर्नयरूपा, या तु साध्यवार्त्तया साध्यनिष्पादनपरिणतिविकला नयाभासरूपा, यातु—साध्याभिलाषसाध्योद्यमपरिणत्या कारणभूता योगादीनां द्रव्याश्रवात्यागरूपा स्थिरता सा आद्यनयचतुष्टयरूपा, यातु—सम्यग्दर्शनज्ञानचारित्रेण स्वरूपसाधनसाध्यनिष्पादनाभ्यासवती स्थिरता सा शब्दनयस्थिरता, यातु—धर्मशुक्लध्यानगतस्वरूपाप्रच्युतिपरिणतिरूपा समभिरूढनयस्थिरता, यातु क्षायिकदर्शनज्ञानचारित्रवीर्यसुखादिभ्यः अप्रच्युतिरूपा सा एवंभूतस्थिरता, विभावेऽपि सर्वनयरूपा स्थिरता तत्वविकल्पानामिष्यते, तथापि—अत्र परमानंदसंदोहभोगरूपसिद्धत्वसाधनरूपा स्वभावस्थिरतास्तस्याएवाऽवसरस्ततः सा एव व्याख्यायते। अनाद्यशुद्धतामग्नः स्वरूपसुखाप्राप्तौ इंद्रियसुखेच्छया चंचलोऽयं जीवः तस्य करुणया गुरुर्वक्ति।

**वत्स किं चंचलस्वांतो, भ्रांत्वा भ्रांत्वा विषीदसि ?। निधिं स्वसंनिधावेव, स्थिरता दर्शयिष्यति ॥१॥**

व्या०—'वत्सेति' हेवत्स ! त्वं चंचलस्वांतः। चपलांतःकरणः सन् इतः इतः भ्रांत्वा, एकं त्यजन् अन्यं गृह्णन् अतिदीनः कथं विषीदसि विषादवान् भवसि ? अप्राप्त्या दीनः, प्राप्त्याऽतृप्तः अत एव परभावे विषाद एव सुखबुद्ध्या

गृहीतस्य स्वयंसुखरूपाभावात् प्राप्तौ अपि न सुखं, अतस्तत्र प्रवृत्तिर्विषादमूला एव, रे वत्स ! स्वसंनिधौ एव स्वसमीपे एव आत्मनि एव, निधिं स्वगुणसंपद्भाजनं, तव स्थिरता भेदरत्नत्रयाभेदरत्नत्रयैकत्वरूपा दर्शयिष्यति उपयोगगोचरं करिष्यति, अतः अनादिविषयास्वादचलतां त्यक्त्वा शुद्धे ज्ञानाद्यनंतगुणे शुद्धात्मनि स्थिरत्वं कुरु ॥ १ ॥

**ज्ञानदुग्धं विनश्येत, लोभविक्षोभकूर्चकैः । आम्लद्रव्यादिवास्थैर्यादिति मत्वा स्थिरो भव ॥ २ ॥**

व्या०—'ज्ञानदुग्धमिति' लोभविक्षोभकूर्चकैः अस्थैर्यात् ज्ञानदुग्धं विनश्येत, लोभः लोलुपतापरिणामः, इच्छा मूर्छा गृध्नता कांक्षा इत्यादि लोभपर्यायाः, परभावाभिलाषरूपाः अशुद्धपरिणामाः, त एव कूर्चकाः, तैर्ज्ञानं तत्वावबोधत्वैकत्वरूपं, दुग्धमिव दुग्धं, विनश्येत् क्षयं लभेत, लोभपरिणाम आत्मस्वरूपानुभवविनाशहेतुः, कस्मादिव ? आम्लद्रव्यादिव, यथा आम्लद्रव्ययोगे पयः विनश्यति तथा लोभपरिणत्या आत्मस्वरूपसुखं विनश्येत् इति । लोभपरिणामः परभावग्रहणेच्छापरिणामः, आत्मगुणानुभवविध्वंसहेतुः, इति ज्ञात्वा आत्मस्वरूपे अखंडानंदरूपे, चित्स्वरूपे, अवर्णागंधारसास्पर्शे, आत्मनि श्रद्धानज्ञानरमणतया स्थिरो भव ॥ २ ॥

**अस्थिरे हृदये चित्रा, वाग्नेत्राऽऽकारगोपना । पुंश्चल्या इव कल्याण—कारिणी न प्रकीर्तिता ॥ ३ ॥**

व्या०—'अस्थिरे इति' हृदये अस्थिरे सति परभावाभिलाषिणि चित्ते सति, चित्रा अनेकप्रकारा वाङ्नेत्राद्याकारगोपना द्रव्यक्रियारूपा पुंश्चली इव, असती स्त्री इव कल्याणकारिणी न प्रकीर्तिता हितकारिणी न मता, जैनानां द्रव्यक्रिया भावधर्मयुता भावाभिलाषिणी एव प्रशस्या, भावधर्मरहिता तु—मार्जारसंयमतुल्या, तत्वार्थे द्रव्यक्रिया केषांचित्

परंपरया धर्महेतुतया जाता, सा तु—देवादिसुखेहलोकयशोभिलाषरहितानां एव, नतु लोकसंज्ञारूढानां, अतः तत्त्वस्वरूपाभिमुखीभूय मन आत्मधर्मैकत्वं विधाय चित्तस्थिरतापूर्वकं स्थैर्यं करणीयं। इति गाथार्थः ॥ ३ ॥

**अंतर्गतं महाशल्यमस्थैर्यं यदि नोद्धृतम्। क्रियौषधस्य को दोषस्तदा गुणमयच्छतः ॥ ४ ॥**

व्या०—'अंतर्गतमिति' अंतर्गतं० अभ्यंतरं महाशल्यं महत् शल्यरूपं परभावानुयायि, परभावानुगतचेतनावीर्यपरिणतिरूपं, अस्थैर्यं अस्थिरत्वं, अतश्चापल्यं आत्मपरिणतीनां स्वस्वकार्याकरणे परभावोन्मुखप्रवर्त्तनरूपं अस्थैर्यं, यदि न उद्धृतं न वारितं, तदा क्रियौषधस्य कः दोषः ? न कोपीत्यर्थः, कथंभूतस्य क्रियौषधस्य ? गुणं स्वात्मस्वभावाविर्भावरूपं अयच्छतः अददतः, क्रिया हि वृत्तिरूपा, भावपरिणतिस्तु आत्मगुणशुद्धिरूपा, अंतः शल्ये सति क्रियौषधेन नो रोगापगमः, अतः आभ्यंतरं परानुयायितापरकर्त्तृता परव्यापकतारूपं शल्यं निवारणीयमिति ॥ ४ ॥

**स्थिरता वाङ्मनःकायैर्येषामंगांगितां गता। योगिनः समशीलास्ते, ग्रामेऽरण्ये दिवा निशि ॥ ५ ॥**

व्या०—'स्थिरता इति' येषां प्राणिनां वाङ्मनःकायैर्वचनमनःकाययोगैः, स्थिरता आत्मगुणनिर्द्धारभासनरमणैकत्वरूपा अंगांगितां तन्मयतां गताः प्राप्ताः, ते योगिनः मुनीश्वराः, समशीलाः, समस्वभावाः, स्वद्रव्यस्वक्षेत्रस्वकालस्वभावरूपस्वात्मस्वभावतः अन्यत् परद्रव्ये परत्वरूपं समत्वेन ज्ञानात् स्वात्मनः सकाशात् यदन्यत् तत्सर्वं भिन्नं इति समत्वं येषां निष्पन्नं तेषां 'ग्रामे' जनसमूहलक्षणे 'अरण्ये' निर्जने 'तुल्यत्वं' इष्टानिष्टताऽभावः 'दिवा वासरे' निशि रात्रौ समत्वं तुल्यपरिणतिः अरक्तद्विष्टतारूपा समपरिणतिर्भवति ॥ ५ ॥

स्थैर्यरत्नप्रदीपश्चेद्दीप्रः संकल्पदीपजैः । तद्विकल्पैरलं धूमैरलंधूमैस्तथाऽऽश्रवैः ॥ ६ ॥

व्या०—'स्थैर्यरत्नेति' यस्य पुरुषस्य 'चेत्' यदि 'स्थैर्यरत्नप्रदीपः, स्थिरतारूपरत्नदीपकः 'दीप्रः' ,देदीप्यमानः तत् तदा संकल्पजैः विकल्पैः धूमैः अलं सृतं, परचिंताऽनुगाऽशुद्धचापल्यरूपः संकल्पः पुनः पुनः तत्स्मरणरूपो विकल्पः संकल्पविकल्परूपधूमैः अलं सृतं, यस्य स्वरूपैकत्वरूपा स्थिरता भासते तस्य संकल्पविकल्पा न भवन्ति, यद्यपि निर्विकल्पसमाधिः अभेदरत्नत्रयीकाले, तथापि स्वरूपलीनानां सांसारिकसंकल्पविकल्पाभावः, तथा 'अलंधूमैः' अत्यंतधूमैः मलिनैः आश्रवैः अपि अलं, सृतं अतः संकल्पविकल्परूपचलपरिणतिमपहाय द्रव्यभावप्राणातिपातमृषावादादत्तादानमैथुनपरिग्रहरूपैराश्रवैः सृतं, योहि आत्मसमाधिरतः स्वस्वभावस्थिरः तस्य आश्रवाः कुतः इति ? यतः आत्मनः स्वधर्मकर्त्तृत्वयथार्थभासनस्वरूपग्राहकत्वस्वगुणभोक्तृत्वस्वस्वभावरक्षकत्वपरिणतस्य न आश्रवाः, एतेषां स्वभावानां परभावपरिणतानां आश्रवाः स्वरूपभ्रांतिरेव स्वपरिणतीः परकर्त्तृत्वेन परिणमयति, यदा तु अस्य स्वरूपावबोधः स्वकार्यकारणनिर्धारः जातस्तदा स्वपरिणतीः स्वकार्यकरणे एव व्यापरयति न परकर्त्तृत्वे कारकचक्रमपि स्वरूपमूढे च परकर्त्तृत्वादिव्यापारेण अशुद्धीकृतं यदा अनेन स्वपरविवेकेन अहं अहं, परः परः, नाऽहं परकर्त्ता भोक्ता एवं लब्धविवेकः स्वकारकचक्रं स्वकार्यकरणे व्यापारयति आत्मा आत्मानं आत्मा आत्मने आत्मनः आत्मनि प्रवर्त्तयति इति स्वरूपं एवं स्वरूपपरिणतानां आश्रवा न भवंति ॥ ६ ॥

उदीरयिष्यसि स्वांतादस्थैर्यपवनं यदि । समाधिधर्ममेघस्य, घटां विघटयिष्यसि ॥ ७ ॥

व्या०—'उदीरयिष्यसि इति' यदि 'स्वांतात्' अंतःकरणात् अस्थैर्यपवनं त्वं उदीरयिष्यसि अस्थिरतामारुतं यदा प्रवर्त्तयिष्यसि तदा समाधेः, स्वरूपार्थविश्रांतिरूपधर्ममेघस्य घटां 'विघटिष्यसि, दूरीकरिष्यसि इति, अस्थिरस्य समाधिध्वंसो भवति अतः आत्मधर्मविषये स्थिरता करणीया ॥ ७ ॥

**चारित्रं स्थिरतारूपमेतत्सिद्धेष्वपीष्यते । यतंतां यतयोऽवश्यमस्या एव प्रसिद्धये ॥ ८ ॥**

॥ इति तृतीयं स्थिरताष्टकम् ॥

व्या०—'चारित्रमिति' अतः कारणात्सिद्धेष्वपि सकलकर्ममलमुक्तेष्वपि स्थिरतारूपं चारित्रं इष्यते, पंचमांगे सिद्धानां चारित्राभावः उक्तः सच—क्रियाव्यापाररूपः, यस्तु स्थिरतारूपः सच—वस्तुधर्मत्वात् अस्त्येवेति, प्रज्ञापनातत्त्वार्थविशेषावश्यकादिषु व्यक्तं व्याख्यातत्वात्, आवरणाभावे आवर्यस्य प्रागभावात् विगतचारित्रमोहस्य चारित्रप्रकटनात्, सिद्धानामपि स्थिरतारूपं चारित्रं, अतः स्थिरता साधनीया प्रथमं सम्यग्दर्शनेन श्रद्धास्थिरतां कृत्वा सद्भासनस्वरूपविश्रांतिस्वरूपैकाग्रतारूपां स्थिरतां कृत्वा समस्तगुणपर्यायाणां स्वकार्यप्रवृत्तिरूपां स्थिरतां निष्पाद्य, समस्तात्मपरिणतिनिःसंगरूपां परमां स्थिरतां निष्पादयति, अतः समस्तचापल्यरोधेन योगस्थिरतां कृत्वा उपयोगस्थिरत्वेन स्वरूपकर्तृत्वस्वरूपरमणत्वस्वरूपभोक्तृत्वरूपं स्थिरत्वं साध्यं, तस्मात् स्थिरत्वसाधने यत्नः करणीय इत्युपदेशः ॥ ८ ॥

॥ इति व्याख्यातं स्थिरताष्टकम् ॥

## ॥ अथ चतुर्थं त्यागाष्टकम् ॥

अथ स्थिरता मोहत्यागाद् भवति, आत्मनः परिणतिचापल्यं मोहोदयात्, मोहोदयश्च निर्धाररूपसम्यग्दर्शनस्वरूपरमणचारित्रावारकश्च, क्षयोपशमी चेतनावीर्यादीनां विपर्यासपररमणतत्त्वादिपरिणमनरूपः, इति, तेन चापल्यं, अतः मोहोदयवारणेन स्थिरता भवति, तेन त्यागाष्टकं वितन्यते, नामस्थापनमोहः सुगमः, द्रव्येण मदिरापानादिना मोहः मूढता परिणामः, द्रव्यात् धनस्वजनवियोगात्, द्रव्ये शरीरपरिग्रहादौ द्रव्यरूपो मोहः, मोहनगीतादिषु गंधर्वादीनां वाक्येषु, अनुपयुक्तस्य अगमनो नोआगमतो रागवत्। भावतः मोहः अप्रशस्तः, समस्तपापस्थानहेतुपरद्रव्येषु, कुदेवकुगुरुकुधर्मेषु, प्रशस्तः मोक्षमार्गे, सम्यग्दर्शनज्ञानचारित्रतपोहेतुषु सुदेवगुर्वादिषु। तत्र मोहत्यागः उत्सर्जनं, भिन्नीकरणं, अत्र यावान् अप्रशस्तमोहस्तावान् सर्वथा त्याज्य एव अशुद्धत्वनिबंधनत्वात्। प्रशस्तमोहसाधने असाधारणहेतुत्वेन पूर्णतत्त्वनिष्पत्तेः अर्वाक् क्रियमाणोऽपि अनुपादेयः। श्रद्धया विभावत्वेनैवावधार्यः। यद्यपि—परावृत्तिस्तथापि अशुद्धपरिणतिरतः साध्ये सर्वमोहपरित्याग एव श्रद्धेयः आद्यनयचतुष्टये कर्मवर्गणापुद्गलेषु तद्योगेषु तद्ग्रहणप्रवृत्त्या संकल्पे कर्मपुद्गलेषु वध्यमानेषु सत्तागतेषु चलोदीरितेषु उदयप्राप्तेषु अशुद्धविभावपरिणामरूपमोहहेतुषु मोहत्वं शब्दादि नयत्रये मोहपरिणतचेतनापरिणामेषु मिथ्यात्वासंयमप्रशस्ताप्रशस्तरूपेषु मोहत्वं, अत आत्मनः अभिनवकर्महेतुः मोहपरिणामः, मोहेनैव जगत् बद्धं मोहमूढा एव भ्रमंति संसारे, यतः ज्ञानादिगुणसुखरोधकेषु चतेषु अनंतवारं अनंतजीवैर्भु-

क्तमुक्तेषु जडेषु अग्राह्येषु पुद्गलेषु मनोज्ञाऽमनोज्ञेषु ग्रहणाग्रहणरूपो विकल्पः मोहोद्भवः, तेनायं पुद्गलाशक्तः मोहपरिणत्या पुद्गलानुभवी स्वरूपानवबोधेन मुग्धः परिभ्रमति, अतः मोहत्यागो हितः । उक्तं च ।

आयानाणसहावी, संदणसीलो विसुद्धसुहरूवो । सो संसारे भमई एसो दोसो खु मोहस्स ॥ १ ॥

जो उ अमुत्ति अकत्ता, असंगनिम्मल सहावपरिणामी ।
सो कम्मकवय( ब )द्धो, दीणो सो मोहवसगत्ते ॥ २ ॥

ही दुक्खं आयभवं मोहमप्पाणमेव धंसेई । जस्सुदये णियभावं, सुद्धं सव्वंपि नो सरई ॥ ३ ॥

इत्येवं मोहस्य विजृंभितं मत्वा त्याज्य इति कथयति,

अहं ममेति मंत्रोऽयं, मोहस्य जगदांध्यकृत् । अयमेव हि नञ्पूर्वः, प्रतिमंत्रोऽपि मोहजित् ॥ १ ॥

व्या अहं ममेति—मोहस्यात्माऽशुद्धपरिणामस्य उपचारतः नृपेति संज्ञस्य 'अहं मम, इति अयं मंत्रः 'जगदांध्यकृत् , ज्ञान चक्षूरोधकः, 'अहमिति, स्वस्वभावेनोन्मादः ' पर' इत्यनेन अहंममेति परभावकरणे कर्तृतारूपोऽहंकारः, अहं सर्वस्वपदार्थतः भिन्नेषु पुद्गलजीवादिषु इदं ममेति परिणामो ममकारः इत्यनेन 'अहंममेति' परिणत्या सर्वपरत्वं स्वतयाकृतं, एषः अशुद्धाध्यवसायः मोहजः, मोहोद्योतकश्च, शुद्धज्ञानांजनरहितानां जीवानां आंध्यकृत् , स्वरूपावलोकनशक्तिध्वंसकृत् , 'हीति' निश्चितं अयमेव नञ् पूर्वः 'प्रतिमंत्रो' विपरीतमंत्रः 'मोहजित्' मोहजये मंत्रः तथा च नाऽहं एते ये परे भावा

ममापि एते न, भ्रांतिः एषा सांप्रतं यथार्थपदार्थज्ञानेनाहं पराधिपः न परभावा मम । उक्तं च—

एगोहं नत्थि मेकोई, नाहमन्नस्य कस्सवि । एवं अदीणमनसो अप्पाणमणुंसासई ॥ १ ॥

एगो मे सासओ अप्पा, नाणदंसणसंजुओ । सेसा मे बाहिरा भावा सव्वे संजोगलक्खणा ॥ २ ॥

संजोगमूला जीवेण, पत्ता दुक्खपरंपरा । तम्हा संजोगसंबंधं, सव्वं तिविहेण वोसिरे ॥ ३ ॥

इत्येवं विभाव्य द्रव्य कर्मतनुधनस्वजनेषु भिन्नतां नीतेषु स्वभावैकत्वेन मोहजयः दृष्टः, अतः अहंकारममकार-त्याग इष्टः इति ॥ १ ॥

पुनस्तदेव भावयति—

शुद्धात्मद्रव्यमेवाहं शुद्धज्ञानं गुणो मम । नान्योहं न ममान्ये चेत्यदो मोहास्त्रमुल्बणम् ॥ २ ॥

व्या० शुद्धात्मद्रव्य इति, शुद्धः० निर्मलः सकलपुद्गलाश्लेपरहितः ज्ञानदर्शनचारित्रवीर्याव्याबाधामूर्ताद्यानंतगुणपर्यायनित्याद्यनंतस्वभावमयः, असंख्यप्रदेशी, स्वभावपरिणामी, स्वरूपकर्तृत्वभोक्तृत्वादिधर्मोपेतः, आत्मा शुद्धात्मा, तदेव शुद्धात्मद्रव्यं एव अहं, अनंतस्याद्वादस्वसत्ताप्रागभावरसिकः, अनवच्छिन्नानंदपूर्णपरमा त्मापरमज्योतीरूपः, अहं शुद्धं निरावरणं सूर्यचंद्रादिसहायविकलप्रकाशं, एकसमये त्रिकालत्रिलोकगतसर्वद्रव्यपर्यायोत्पाद व्ययध्रौव्यावबोधकं ज्ञानं मम गुणः कर्त्ताज्ञानस्य मे कार्यं ज्ञानं ज्ञानकरणान्वितः ज्ञानपात्रः ज्ञानात् जानन्, ज्ञानाधारः अहं ज्ञानमेव मम स्वरूपं इत्य-

वगच्छन् अन्ये धर्माधर्माकाशपुद्गलस्वतोऽन्यत् जीवपदार्थ जीवपुद्गलसंयोगजपरिणामः अन्यः सर्वः, अहं न, मत्तः भिन्ना एव एते पूर्वोक्ताः भावाः, मम द्रव्यादिचतुष्टयेन भिन्नत्वात् । यो हि व्याप्यव्यापकभावाद्भिन्नः, स मम न, यः असंख्य-प्रदेशे स्वक्षेत्रे अभेदतया स्वपर्यायपरिणामः, स मम इति, स्वस्वरूपे स्वत्वं परेपरत्वपरिणामः, 'मोहास्त्रं' मोहच्छेदकं अस्त्रं ईदृग्भेदज्ञानविभक्तेन मोहक्षयः, अतः सर्वपरभावभिन्नत्वं धिधेयं। अतएव निर्ग्रंथाः त्यजन्ति आश्रवान्, श्रयंति गुरुच-रणान्, वसंति वनेषु, उदासीभवंति विपाकेषु, अभ्यस्यंति आगमव्यूहं, अनादिपरभावच्छेदाय प्रयत्नः उत्तमानां ॥ २ ॥

यो न मुह्यति लग्नेषु, भावेष्वौदयिकादिषु। आकाशमिव पंकेन, नाऽसौ पापेन लिप्यते ॥ ३ ॥

व्या० यो न मुह्यतिइति, यः जीवः तत्वविलासी 'औदयिकादिषु भावेषु, शुभाशुभकर्मविपाकेषु आदिशब्दात् परभा-वानुगक्षयोपशमे अशुद्धपारणामिकभावग्रहः, तेषु 'लग्नेषु' आत्मनि स्वक्षेत्रीभूतेषु 'यः न मुह्यति मोहैकीभावं न प्राप्नोति भेदज्ञानविवेकेन त्यक्तपरसंयोगः अवश्योदितेषु यः अव्यापकः स पापेन कर्मणा न लिप्यते। किमिव पंकेनआकाशमिव, यथा आकाशस्थपंकः आकाशस्य न लेपकृत्, तत्र अपरिणमनात् । एवं शमसंवेगनिर्वेदनिग्रहीतपरभावस्य अवश्यो-दयविपाके भुज्यमानेऽपि अव्यापकत्वात् न लेपः । स हि-पूर्वकर्मनिर्जरारूपं कार्यं करोति, स्वीयपरिणामस्य भिन्नरक्षणेन अकर्तृत्वं तस्य परभावानां । उक्तं च अध्यात्मविन्दौ-

स्वत्वेन स्वं परमपि परत्वेन जानन् समस्तान्यद्रव्येभ्यो विरमणमिति यच्चिन्मयत्वं प्रपन्नः ।

स्वात्मन्येवाभिरतिमुपनयन् स्वात्मशीली स्वदर्शीत्येवं कर्त्ता कथमपि भवेत् कर्मणो नैष जीवः ॥ १ ॥

न कामभोगा समयं उवे ( वें ) ति, नयावि भोगा विगयं उवे ( वें ) ति ।
जे तप्प उसीअपरिग्गहीअ सो तेसु मोहा विगयं उवेई ॥ २ ॥

एवं परद्रव्ये अरमन् आत्मा मुच्यते अतएव सर्वसंगपरिहारोऽसंगो हि मुच्यतां निमित्तं मुह्यता त्यागार्था, तन्निमि, त्तान् धनस्वजनांगनाभोगभोजनादीन् त्यजति कारणाभावे कार्याभावः, इति भावाश्रयपरिणतिरोधसंयमः, तद्रक्षणाय वृद्ध्यर्थं हिताय आश्रवत्यागो मुनीनां, भावनाच–यैः परभावा अभोग्या अग्राह्याः कृताः ते कथं तत्र रमंते ? ॥ ३ ॥

पश्यन्नेव परद्रव्य—नाटकं प्रतिपाटकम् । भवचक्रपुरःस्थोऽपि, नामूढः परिखिद्यसे ॥ ४ ॥

व्या० पश्यन्नेवेति; स्वरूपाच्युतिस्वधर्मैकत्वे 'अमूढः' तत्त्वज्ञानी, स्वरूपसाधनोद्यतः, 'प्रतिपाटकं' एकेंद्रिय–विकलेंद्रिय-पंचेंद्रियरूपपाटके वरतिर्यग्देवनरकलक्षणे सर्वस्थाने परद्रव्यनाटकं जन्मजरामरणादिरूपं संस्थाननिर्माणवर्णादिभेदविचित्रं, पश्यन् एव न 'परिखिद्यते' न खेदवान् भवति । जानाति च पुद्गलकर्मविपाकजां चित्रतां, न मत्स्वरूपं भ्रांतानां भवत्येव, न तत्त्वपूर्णानां कथंभूतः अमूढः ? भवचक्रपुरस्थः अपि, अनादिस्वकृतकर्मपरिणामनृपराजधानीचतुर्गतिरूपभवचक्रक्रोडगतोऽपि, आत्मानं भिन्नं जानन् न खिद्यति, परस्मैपदं तु काव्ये प्रयुक्तत्वात् "खिद्यतिकाव्येजड" इति पाठदर्शनात् इत्यनेन कर्मविपाकचित्रतां भुंजन्नपि अखिन्नः तिष्ठति, कर्त्तृत्वकाले न अरतिअनादरौ तर्हि भोगकाले को द्वेष उदयागतभोगकाले इष्टानिष्टतापरिणतिः एव अभिनवकर्म हेतुः, अत अव्यापकतया भवितव्यं, शुभोदयोऽपि आवरणः अशुभोदयोऽप्यावरणः, गुणावरणत्वेन तुल्यत्वात् । का इष्टानिष्टता ? ॥ ४ ॥

विकल्पचकषैरात्मा, पीतमोहासवोह्ययम् । भवोच्चतालमुत्तालप्रपंचमधितिष्ठति ॥ ५ ॥

व्या—विकल्पचपकैरिति, विकल्पाश्चित्तकल्लोला एव चपकाः मद्यपानपात्राणि तैः हीति निश्चितं अयं जीवः पीतः मोह एव आसवो मादकरसोयेन सः पीतमोहासवः पुरुषः भवोच्चतालं भवः संसारः स एव उच्चतालं मद्यपगोष्टीक्षेत्रं प्रति उच्चतालं पुनःपुनः उच्चस्वरेण तालदानरूपं प्रपंचं विस्तारं अधितिष्ठति प्राप्नोति इत्यनेन मोही जीवः मदिरामत्तवत् चापल्यवैकल्यं करोति परं स्वत्वेन स्वं च परत्वेन कलयन् आत्मानं अकायनिष्पादनपटिष्टं प्रवर्त्तयन् स्वस्थानभ्रष्टः भ्रमति, अतएव मोहत्यागः श्रेयान् ॥ ५ ॥

निर्मलस्फटिकस्येव, सहजं रूपमात्मनः । अध्यस्तोपाधिसंबंधो, जडस्तत्र विमुह्यति ॥ ६ ॥

व्या० निर्मलस्फटिकस्येवेति,—निर्मलस्फटिकस्वरणनिस्संगस्फटिकस्य इव आत्मनः—ज्ञायकद्रव्यस्य सहजं—स्वाभाविकं शुद्धं रूपं अस्ति इत्यनेन वस्तुवृत्त्या आत्मा स्फटिकवत् निर्मल एव—निस्संगएव संग्रहनयेन आत्मा परोपाधिसंगी एव नास्ति परमज्ञायकचिदानंदरूपः अध्यास्थोपाधिसंबंधः प्राप्तपुद्गलसंसर्गजकर्मोपाधिसंबंधः, अनेकग्लानम्लानावस्थः जडः वस्तुस्वरूपापरिज्ञानी तत्र उपाधिभावे मुह्यति, एकत्वं प्राप्नोति, यथा—मूर्खः श्यामनीलपीतादिपुष्पसंयोगात् स्फटिकाभेदरीत्या नीलपीतस्वभावं जानाति तथा वस्तुस्वरूपावबोधविकलो जीवो मिथ्यात्वाऽविरतिकषाययोगनिमित्तात् बद्धैकेंद्रियादिनामकर्मोदयात् एकेंद्रियादिभावमापन्नं एकेंद्रियादिरूपमेव मन्यते, एकेंद्रियोऽहं विकलोऽहं पंचेंद्रियोऽहं जानाति परं शुद्धं स्वीयं सच्चिदानंदरूपं निर्मलं स्वरूपं नावबोधति इति मूर्खतापरिणतिः तत्त्वज्ञः खानिस्थवज्रं समलं सावरणं समृदपि रत्न-

परीक्षकवत् वज्रत्वेन अवधारयति, एवं ज्ञानावरणाद्यावृतं अतदाकारं ज्ञानज्योतिः प्रकाशविकलमपि आत्मानं पूर्णानंदं सहजाप्रयासानंदसंदोहं सर्वज्ञं सर्वतत्त्वस्वरूपाभिन्नं आत्मानं सम्यग्ज्ञानबलेन निर्धारयति इति, इत्यनेन आत्मा शुद्ध एव श्रद्धेयः, उपाधिदोषस्तुसन्नपि तादात्म्याऽभावात् संसर्गजत्वात् भिन्नएव निर्धार्य इति ॥ ६ ॥

मोहात् जीवः परवस्तु आत्मत्वेन जानन् आरोपजं सुखं सुखत्वेन अनुभवति, भेदज्ञानी तु आरोपजं सुखं दुःखमेवेति निवारणाय यत् तदुपदिशन्नाह—

आनारोपसुखं मोह—त्यागादनुभवन्नपि । आरोपप्रियलोकेषु, वक्तुमाश्चर्यवान् भवेत् ॥ ७ ॥

व्या० अनारोपेति, अनारोपजं सहजं सुखं स्वगुणज्ञाननिर्द्धारप्राग्भावरूपं सुखं मोहत्यागात् मोहक्षयोपशमात् अनुभवन्नपि भुंजन्नपि आरोपः मिथ्योपचारः प्रियः येषां ते आरोपप्रियाश्च ते लोकाश्च आरोपप्रियलोकाः तेषु आरोपसुखं वक्तुं आश्चर्यवान् भवेत्? अत्र काकूक्तिः अपि तु न भवेत्, येन आरोपजं सुखं प्राप्तं स आरोपसुखे आश्चर्यवान् चमत्कारवान् भवति अथवा अनारोपसुखानुभवी आरोपप्रियलोकेषु अग्रे आरोपजं सुखं सुखं इति वक्तुं अपि आश्चर्यवान् भवति, वक्तुं न समर्थो भवति सुखाभावात् सुखकारणाभावात्तच्च वस्तुवृत्त्या दुःखरूपे सुखं इति लोकार्थं उक्तेऽपि स्वयं आश्चर्यवान् भवेत् किमुक्तं इदं मयानेदं सुखं अतः परसंभवे सुखे सुखाभासः निवारणीयः मोहमूलत्वात्, पौद्गलिके सुखे सुखभ्रांतिरेव आभ्यंतरं मिथ्यात्वं इति ॥ ७ ॥

यश्चिद्दर्पणविन्यस्त—समस्ताचारचारुधीः । क्व नाम स्वपरद्रव्येऽनुपयोगिनि मुह्यति ? ॥ ८ ॥

व्या० यश्चिद्दर्पण इति, यः पुरुषः आगमानुगताशयः चिद् ज्ञानं सर्वपदार्थपरिच्छेदकं तदेव दर्पणं आदर्शः तेन विन्यस्ताः स्थापिताः समस्ताः ज्ञानाद्याचाराः तेन चारुः मनोहरा धीर्बुद्धिर्यस्य सः पुरुषः, नाम इति कोमलामंत्रणे परद्रव्ये पुद्गलादौ अनुपयोगिनि अकिंचित्करे कस्मिन्नपि कार्ये गृहीतुमयोग्ये क्व मुह्यति ? इत्यर्थः यः ज्ञानादिपंचाचारेण संस्कारितोपयोगी आत्मानंदं ज्ञानदर्पणे पश्यन् परद्रव्ये कथं मुह्यति ? नैवेति । तत्त्वज्ञानविकलानां अनादिमिथ्यात्वाऽसंयमवतां स्वरूपानुभवशून्यानां एव परद्रव्यानुभवः । तत्र सुखभ्रांतिरूपो मोहः । स्वभावधर्मनिर्द्धारभासनरमणानुभव सुखास्वादलीनानां न मोहः, अतः आत्मस्वरूपैकत्वमेव मोहत्यागोपायः, अत एव अनादिभ्रांतिमपहाय आत्मानुभवरसिकतया भवितव्यं । आत्मस्वरूपश्रद्धानभासनरमणानुभववतास्थातव्यं, इति तत्त्वं, आगमश्रवणकुसंगत्यागात् तत्त्वरुचि तत्त्वज्ञानबलेन संयोगजं सर्वमनित्यमशरणं संसारहेतुः आत्मा एकः सर्वपदार्थांतरं आत्मव्यतिरिक्तं परस्पर्श एवाशुचिपरानुयायिता एव आश्रवाःस्वरूपानुगमनं संवरः उदीरणके अमग्नता इत्यादि परिणत्या मोहत्यागो विधेयः इति चतुर्थं मोहत्यागाष्टकम् व्याख्यातम् ॥ ८ ॥

## ॥ अथ पंचमं ज्ञानाष्टकम् ॥

मोहत्यागश्च ज्ञानाद् भवति, अतः ज्ञानाष्टकं लिख्यते । तत्र ज्ञानलक्षणं 'व्यवहाराव्यभिचाररूपं सर्वपदार्थावबोधरूपं सामान्यविशेषात्मनि पदार्थजाते विशेषबोधलक्षणं ज्ञानं, ज्ञायते अनेनेति ज्ञानं । उक्तं च उत्तराध्ययने "दव्वाणयगुणाणय, पज्जवाणयनाणेपानाणं नाणिदिहसायं" इति । आत्मनः विशेषलक्षणं नाम ज्ञानं शब्दालापरूपं, स्थापनाज्ञानं

सिद्धचक्रादौ स्थापितं, द्रव्यज्ञानं आगमगतज्ञानपदावबोधी अनुपयुक्तः, नो आगमतः द्रव्यज्ञानं अनुपयुक्तावस्था इति तत्त्वार्थे। तथा द्रव्यज्ञानं पुस्तकन्यस्तं। अथवावाचना पृच्छना परिवर्त्तना धर्मकथानुप्रेक्षादीनां द्रव्यज्ञानं, भावज्ञानमुपयोगपरिणतिः मत्यादिप्रकारं स्वपरविवेचकं परिच्छेदावलोकनाभासनादिपर्यायं, तत्र नैगमेन ज्ञानं, भाषादिस्कंधज्ञानं। संग्रहेण सर्वजीवज्ञानं अभेदोपचारात्, व्यवहारेण पुस्तकादिज्ञानं, ऋजुसूत्रेण तत्परिणामसंकल्परूपं ज्ञानं, अथवा—ज्ञानहेतुवीर्यं, नैगमेन संग्रहेण आत्मा व्यवहारेण क्षयोपशमीभूतज्ञानाविभागप्रवृत्तिः, ऋजुसूत्रेण वर्त्तमानबोधः यथार्थायथार्थरूपमुभयज्ञानं, शब्दनयेन सम्यग्दर्शनपूर्वकयथार्थावबोधलक्षणं कारणकार्यसापेक्षं ज्ञानं स्वपरप्रकाशं स्याद्वादोपेतं अर्पितानर्पितादियुक्तं सम्यग्ज्ञानं, समभिरूढनयेन सकलज्ञानवचनपर्यायशक्तिप्रवृत्तिरूपं एवंभूतनयेन मत्यादिस्वस्वरूपपूर्णैवभूततावस्तुतः केवलं ज्ञानं एवंभूतज्ञानं, अत्र मिथ्यादर्शनेऽपि विपर्यासोपेतं ज्ञानं कुज्ञानं, तत्र मोहत्यागहेतुः, अतः सम्यक् दर्शनपूर्वकस्वस्वरूपोपादेयापरभावहेयोपयोगलक्षणं सम्यग्ज्ञानं गृहीतं, तस्यैव संसारौदासीन्यहेतुत्वात् उक्तं च—

> तद्ज्ञानमेव न भवति, यस्मिन्नुदिते विभाति रागगणः।
> तमसः कुतोऽस्ति शक्तिर्दिनकरकिरणाग्रतः स्थातुम्? ॥ १ ॥

अतः ज्ञानं तत्त्वावबोधरूपं आत्मनः स्वस्वभावाविष्करणंहेतुः, मोक्षमार्गस्य मूलं 'ज्ञानक्रियाभ्यां मोक्षः' 'पढमं नाणं।

तओ दया, एवं चिट्ठह सव्वसंजए । एवं स्वरूपं अत्रानुप्रेक्षायुक्तः स्पर्शज्ञानस्यावसरः तद्व्याख्यायते—

**मज्जत्यज्ञः किलाज्ञाने, विष्टायामिव शूकरः । ज्ञानी निमज्जति ज्ञाने, मराल इव मानसे ॥ १ ॥**

व्या० मज्जत्यज्ञ, इति—अज्ञः स्वभावविभावाविवेकः किल इति सत्ये अज्ञाने अयथार्थोपयोगे मज्जति, मग्नो भवति, यथार्थवबोधविकलः अयथार्थे लीनः भवति, क इव ? विष्टायां शूकरः इव, यथा शूकरः विष्टायां मज्जति तथा अज्ञः अभोग्ये आत्मगुणावरणकारणे परवस्तुनि सातादिविपाके इन्द्रियविषये मज्जति । ज्ञानी—यथार्थविबोधी ज्ञाने तत्त्वावबोधे आत्मस्वरूपे निमज्जति तन्मयः भवति । आत्मस्वरूपावबोधानुभवलीनाः शब्दादिविषयान् मनोज्ञान् इंद्रादिविस्मयहेतून् तृणयंति, रमंते स्वरूपे, भीष्मग्रीष्मतापतप्तशिलातलस्थाः अपि शीतलाः अत्यंतहिमे अकंपाः, ध्यायंति स्वतत्त्वं जगत्विक्षोभ—अनाक्षोभक्षुधा चिंतयंति स्वगुणपर्यायान्, शक्रस्पर्द्धिचक्रिलीलां त्यजंति, किंबहुना आत्मानंदाववोधरसिकानां अन्यत् दुष्टं, यथार्थसंपूर्णप्रत्यक्षात्मरसिकाः तितिक्षंति परीषहान्, प्रारंभयंति श्रेणिं, तन्वंति स्वरूपैकत्वरूपं ध्यानं, अतः ज्ञानास्वादिन एव धन्याः उक्तं च संवेगरंगशालायाम्:—

**तें धन्ना सुकयत्था, जेसिं नियतत्तबोहरुइ जाया । जे तत्तबोहभोई, ते पुज्जा सव्वभव्वाणं ॥ १ ॥**

**जेसिं निम्मलनाणं, जायं तत्तसहावभोगित्तं । ते परमातत्तसुही, तेसिं नामंपि सुहुयरं ॥ २ ॥**

तेषां जन्म जीवितं सफलं ये स्वतत्त्वबोधरसिका इति, अतः ज्ञानी ज्ञाने मज्जति, यथा मरालः हंसः मानसे मज्जति तथा इति ॥ १ ॥

निर्वाणपदमप्येकं, भाव्यते यन्मुहुर्मुहुः । तदेव ज्ञानमुत्कृष्टं, निर्बंधो नास्ति भूयसा ॥ २ ॥

व्या० निर्वाणपदमिति,—निर्वाणपदं निःकर्मताहेतुपदं, एकमपि स्याद्वादसापेक्षं मुहुः मुहुः वारंवारं भाव्यते आत्मतन्मयतया क्रियते, वाचनापृच्छनापरिवर्त्तना—अनुप्रेक्षाधर्मचिंतनपरिशीलननिदध्यासनतया करणं कर्तृत्वं कार्यत्वं कारणत्वं आधारत्वं आस्वादनं विश्रामः स्वरूपैकत्वं, तदेवोत्कृष्टं ज्ञानं येनऽऽत्मा स्वरूपलीनो भवति अनाद्यनास्वादितात्मसुखमनुभवति, तत् पदमप्यभ्यस्य, शेषेण वाग्विस्ताररूपेण भूयसाऽपि वेदनेनज्ञानेनको निर्बंधः किंबहुतरेण जल्पज्ञानेन? भावनाज्ञानं स्वल्पमप्यमृतकल्पं अनादिकर्मरोगापगमक्षममिति ॥ २ ॥

स्वभावलाभसंस्कारकारणं ज्ञानमिष्यते । ध्यांध्यमात्रमतस्त्वन्यत्तथा चोक्तं महात्मना ॥ ३ ॥

व्या० स्वभावलाभेति, स्वभावः ज्ञानाद्यनंतगुणपर्यायरूपः, तस्य लाभः प्राप्तिः संस्कारः वासना तद्प्राग्भावता वा तस्य स्मरणं सदैव निरंतरं तदुपयोगिताज्ञानं इष्यते तत्त्वलाभतः, अन्यत् सर्वं वाग्विलासरूपं स्वस्वरूपास्पर्शिबाह्यज्ञानं लौकिकलोकोत्तरागमविकल्परूपं सर्वं ध्यांध्यमात्रं व्याक्षेपरूपं, यदात्मपरविभजनात्मैकत्वपरपरित्यागाय न भवति तत्सर्वं विलापरूपमरण्ये, तथाच हरिभद्रपूज्यैः—

अकुत्थासंयतं नाणं, सुअपाठुव्व विन्नेयं ।

अनुयोगद्वारे—

यो० दृ०—ससिक्खियं ठियं मियं जायं जाव गुरुवयणोवगयं वायणाए पुच्छणाए परिअट्टणाए धम्मकहाए नो अणुप्पेहाए ता दव्वसुअं ।

इति प्राप्तचेतनाक्षयोपशमः संज्ञाचतुष्टये इहलोकाशंसया परलोकाशंसया किं किं नास्ति, यस्तु सकलपुद्गलोद्विग्नः स्वस्वभावार्थी आत्मानं यथार्थावबोधेन जानाति तज्ज्ञानं तत्रोद्यमःकार्यः स्वसाध्यसिद्धये, उक्तं चः—

आत्माज्ञानभवं दुःखं, आत्मज्ञानेन हन्यते । अभ्यस्यं तन्नघातेन (?) येनात्मा ज्ञानमयो भवेत् ॥ १ ॥
स्वल्पज्ञानेन नो शांतिं, याति दृप्तात्मनां मनः । स्तोकं दृष्टा यथा तप्त—भूमिरुष्मायतेतराम् ॥ २ ॥

अतः निरतिचारानाशंसि यथार्थात्मबोधे रसिकतया भवनीयं तदर्थमेवांगोपांगयोगोपधानाद्यभ्यासः मुनीनां । तथाचोक्तवान् महात्मा पतंजलिप्रमुखा यशोधन पटुश्च श्रीहरिभद्रगुरुर्योगदृष्टिसमुच्चये ॥ ३ ॥

वादांश्च प्रतिवादांश्च, वदंतोऽनिश्चितांस्तथा । तत्त्वांतं नैव गच्छन्ति, तिलपीलकवद् गतौ ॥ ४ ॥

व्या० वादांश्चेति—वादान् पूर्वपक्षरूपान्, प्रतिवादान् उत्तरपक्षरूपान्, परपराजयस्वजयेच्छया वदंतः विवादशुष्कवादादि कुर्वंतः, तत्वांतं तत्त्वस्य वस्तुधर्मरूपस्य अंतं पारं नैव गच्छंति नैव लभंते, कथंभूतान् वादान् ? अनिश्चितान् अनिर्धारितपदार्थस्वरूपान् वदंतः तत्त्वप्रांतं स्वीयात्यंतकाकृत्रिमात्मज्ञानानुभवरूपं नैव लभंते । किंवत् ? गतौ गमने तिलपीलकवत् तिलपीलकवृषभवत् भ्रमन् किंचित् स्थानांतरं न लभते, एवं तत्त्वज्ञानानभिलाषी अनेकशास्त्रश्रमं कुर्वन् न तत्त्वानुभवं स्पृशति, अतः यथार्थतत्त्वज्ञानरुचिमत्तया भवनीयं ॥ ४ ॥

स्वद्रव्यगुणपर्याय—चर्या वर्या परान्यथा । इति दत्तात्मसंतुष्टिर्मुष्टिज्ञानस्थितिर्मुनेः ॥ ५ ॥

व्या० स्वद्रवेति, स्वद्रव्ये गुणाश्रयलक्षणे शुद्धात्मनि स्वगुणे एकद्रव्याश्रितसहभाव्यनंतपर्यायोपेतज्ञानदर्शनचारित्र-स्वरूपे स्वपर्याये उभयाश्रयलक्षणे अर्थव्यंजनादिभेदे चर्या तन्मयतापरिणतिः, तत्र वर्त्तना चर्या श्रेष्टा स्वद्रव्यगुणपर्याये परिणमनं आत्महितंः—

आया सभावनाणी, भोइ रमई विवत्थुधम्मंमि । सो उत्तमो महप्पा, अवरे भवसूयरा जीवा ॥ १ ॥

परापरद्रव्यगुणपर्यायस्मणानुभवलक्षणापरिणतिः अन्यथा अकार्या अहिता परभावपरिणाम एव भ्रमणहेतुः उक्तं चः—

परसंगेण बंधो, मुक्खो परभावचायणे होई । सव्वदोसाण मूलं, परभावाणुभवपरिणामो ॥ १ ॥

अत एव देशविरतसर्वविरताः प्रत्याख्यांति परिग्रहादीन्, त्यजंति स्वजनपरिजनान्, प्रतिपद्यंते एकाकिविहारं, श्रृण्वंति स्वसत्तागोष्टिं, चिंतयंति स्वधर्मानंततां, ध्यायंति स्वगुणपर्यायं, परिणाममग्ना भवंति तदनुभवनेन, त्यजंति सर्व-परभावानुमोदनां इति, एवं प्रकारेण मुनेः त्रिकालनिर्विषयस्य ज्ञाततत्त्वस्य मुष्टिर्ज्ञानस्थितिः अवस्थानं, संक्षेपरहस्यज्ञान-विश्रामसर्यादा; कथंभूता स्थितिः ? दत्तात्मसंतुष्टिः, दत्ता प्रदत्ता आत्मनः संतुष्टिः संतोष इत्यनेन आत्मग्रहणं परपरि-त्यागः इतिमर्यादा निर्ग्रंथस्य ॥ ५ ॥

अस्ति चेद् ग्रंथिभिद् ज्ञानं, किं चित्रैस्तंत्रयंत्रणैः । प्रदीपाः कोपयुज्यंते ?, तमोघ्नी दृष्टिरेव चेत् ॥ ६ ॥

व्या०—अस्तीति चेत् यदि ग्रंथिभित् ग्रंथिभेदोत्पन्नं विषयप्रतिभासदलविकलं आत्मधर्मवेद्यसंवेद्यरूपं ज्ञानं प्रतिभासः अस्ति तंत्रयंत्रणैः चित्रैः अनेकप्रकारैः परसाधनानिमित्तैः किं ? न किमपि सम्यग्दर्शनज्ञानचारित्रभावपरिणतस्य किं परापेक्षया ? । तत्र दृष्टांतः । चेत् दृष्टिः चक्षुः तमोघ्नी तमः अंधकारं तस्य घ्नी हंत्री ( तं हंतीति ) प्राप्ता तदा प्रदीपाः क्व उपयुज्यंते ? न क्वापि, दृष्टिः सर्वालोकनक्षमा तर्हि सहायभूतदीपस्य किं प्रयोजनं ? । अत्र ग्रंथिभेदस्वरूपं ।
तत्र—पंचेंद्रियत्वसंज्ञित्वपर्याप्तत्वरूपाभिस्तिसृभिः लब्धिभिः युक्तं अथवा उपशमलब्धिः उपदेशश्रवणलब्धिः करणत्रयहेतुप्रकृष्टयोगलब्धित्रिकयुक्तः करणकालात्पूर्वमपि अंतर्मुहूर्तकालं यावत् प्रतिसमयमनंतगुणवृद्ध्या विशुद्ध्या विशुध्यमाना अवदातमाना चित्तसंततिः ग्रंथिकसत्वानां अभव्यसिद्धिकानां या विशोधिः तामतिक्रम्य वर्त्तमानः ततोऽनंतगुणविशुद्धः अन्यतरस्मिन् (मतिश्रुतविभंगान्यतमस्मिन् साकारोपयोगे) चान्यतमस्मिन् वर्त्तमानः तिसृणां विशुद्धानां लेश्यानामन्यतमस्यां लेश्यायां वर्त्तमानः जघन्यतः तेजोलेश्यायां मध्यमपरिणामेन पद्मलेश्यायां उत्कृष्टपरिणामेन शुक्ललेश्यायां तथा पूर्वजानां सप्तानां कर्मणां स्थितिमंतः सागरोपमकोटाकोटीप्रमाणं कृत्वा अशुभानां कर्मणां अनुभागं च मुख्यस्थानकं संतं ( सत् ) द्विस्थानकं करोति, शुभानां च कर्मणां द्विस्थानकं संतं ( सत् ) चतुःस्थानकं करोति, तथा ध्रुवप्रकृतीः सप्तचत्वारिंशत् संख्यया बध्नन् परावर्त्तमानाः स्वस्वभावप्रायोग्याः प्रकृतीः शुभा एव बध्नाति ता अप्यायुर्वर्ज्जाः अतीव विशुद्धपरिणामो हि नायुर्बंधमारभते, यदुत तिर्यग्मनुष्यो वा प्रथमं सम्यक्त्वं उत्पादयन् देवगतिप्रायोग्याः शुभाः प्रकृतीः बध्नाति, देवो नैरयिको वा प्रथमं सम्यक्त्वमुत्पादयन् मनुजगतिप्रायोग्याः सुभगाः प्रकृतीः बध्नाति, सप्तमनर-

कतिर्यग् द्विकं नीचैर्गोत्रं बध्नाति, भवप्रायोग्यात् बध्यमानस्थितिः अंतःसागरकोटाकोटिं बध्नाति, नाधिकां योगवशात् प्रदेशाग्रमुत्कृष्टजघन्यमध्यमं च बध्नाति, स्थितिबंधे पूर्णे सत्यन्यं स्थितिबंधं प्राक्तनस्थितिबंधं प्राक्तनस्थितिबंधापेक्षया पल्योपमासंख्येयभागन्यूनं करोति, ततः अन्यं पल्योपमासंख्येयभागं न्यूनं करोति अतः अन्यं स्थितिबंधपूर्वपूर्वापेक्षया पल्योपमासंख्येयभागं न्यूनं करोति, अशुभानां च प्रकृतीनां बध्यमानानामनुभागं द्विस्थानकं बध्नाति, तमपि प्रतिसमयमनंतगुणहीनं शुभानांच चतुःस्थानकं प्रतिसमयमनंतगुणवृद्धिं कुर्वन् करणं यथाप्रवृत्तं करोति, ततोऽपूर्वकरणं, ततः अनिवृत्तिकरणमिति, करणं परिणामविशेषः । एतानि च त्रीण्यपि करणानि प्रत्येकमंतर्मुहूर्त्तकानि ततः उपशांताद्धा लभते सापि चांतर्मुहूर्त्तकी यथाप्रवृत्तिकरणं चः—

अणुसमयंवद्दंतो अज्झवसाणाणणंतगुणणाए । परिणामट्ठाणाणं दोसु विलोगा असंखिज्जा ॥ १ ॥

इति कर्मप्रकृतौ, प्रतिसमयं अध्यवसानानामनंतगुणतया विशुद्ध्या वर्द्धमानानां करणसमाप्ति यावत् वर्द्धते ते (तानि) कियंति अध्यवसानानि भवंति ? द्वयोरपि यथा प्रवृत्तापूर्वकरणयोः परिणामस्थानानामनुसमयं लोकासंख्येया भवंति यथाप्रवृत्त करणे अपूर्वकरणेच प्रतिसमये संख्येयलोकाकाशप्रदेशराशिप्रमाणानि, अध्यवसायस्थानानि भवंति तथाहि यथाप्रवृत्तकरणे प्रथमसमये विशोधिस्थानानि नानाजीवापेक्षया असंख्येयलोकाकाशप्रदेश प्रमाणानि, द्वितीयसमये विशेषाधिकानि, ततोऽपि तृतीयसमये विशेषाधिकानि, एवं यावच्चरमसमये, एवमपूर्वकरणेऽपि द्रष्टव्यं । अमूनि चाध्यवसायस्थानानि यथाप्रवृत्ताऽपूर्वकरणयोः संबंधीनि स्थाप्यमानानि विषमचतुरश्रं क्षेत्रं आवृण्वंति, तयोरुपरिचानिवृत्तिकरणा-

ध्यवसायानि मुक्तावलीसंस्थानि उपरिउपरि अमूनि अनुचिंत्यमानानिं प्रतिसमयमनंतगुणवृध्या प्रवर्त्तमानाभ्यवगंतव्यानि, तिर्यक्षट्स्थानप्रतीतानि । इह कल्पनया द्वौ पुरुषौ युगपत्करणप्रपन्नौ विवक्ष्येते, तत्र एकः सर्वजघन्यया श्रेण्या प्रतिपन्नः, अपरः सर्वोत्कृष्टया विशोध्या, प्रथमजीवस्य प्रथमसमये मंदा, द्वितीयसमये अनंतगुणा तृतीये अनंतगुणा एवं यावत् येषां प्रवृत्तकरणस्य संख्येयो भागो गतो भवति, ततः प्रथमसमये द्वितीयस्य जीवस्य उत्कृष्टं विशोधिस्थानं अनंतगुणं वक्तव्यं, ततोऽपि द्वितीये उत्कृष्टा विशोधिरनंतगुणा, ततः उपरि जघन्यविशोधिः अनंतगुणा, एवमुपर्यधश्च एकैकं विशोधिस्थानमनंतगुणं द्वयोर्जीवयोस्तावन्नेयं यावच्चरमसमये जघन्यविशोधिस्ततः आचरमात् चरममभिव्याप्य यानि अमुक्तानि शेषाणि उत्कृष्टानि स्थानानि तानि क्रमेण निरंतरमनंतगुणानि वक्तव्यानि, तदेवं समासं यथाप्रवृत्तकरणं, अस्य च यथाप्रवृत्तकरणस्य पूर्वप्रवृत्तं इति द्वितीयं नामशेषकरणाभ्यां, पूर्वं प्रथमं प्रवृत्तं पूर्वप्रवृत्तमिति अस्मिंश्च यथाप्रवृत्तकरणे स्थितिघातरसघातौ गुणश्रेणिर्वा न प्रवर्त्तेते केवलमुक्तरूपा विशोधिरेवानंतगुणा यानि वा प्रशस्तानि कर्माण्यत्र स्थितो बध्नाति तेषामनुभागं द्विस्थानकं बध्नाति, यानि च शुभानि तेषां चतुःस्थानकं, स्थितिबंधेऽपि पूर्णे पूर्णे सत्यन्यं स्थितिबंधं पल्योपमसंख्येयभागन्यूनं च बध्नाति । संप्रति अपूर्वकरणमभिधीयते । "बीयस्स बीयसमये जहएहमवि अणंतरुक्कसा" इत्यादिवचनात् । द्वितीयस्य अपूर्वकरणस्य यो द्वितीयः समयः कृतजघन्यमपि विशोधिस्थानात् अनंतगुणं वक्तव्यं । एतदुक्तं भवति—ते हि यथाप्रवृत्तकरणवत् प्रथमतो निरंतरं विशोधिस्थानं अनंतगुणं वक्तव्यं, किंतु प्रथमसमये प्रथमतो जघन्या विशोधिः सर्वस्तोका, सापि च यथाप्रवृत्तकरणचरमसमयभाविन उत्कृष्टा विशोधिस्थानात् अनंत-

गुणा, ततः प्रथमसमये एवोत्कृष्टा विशोधिरनंतगुणा, ततो द्वितीयसमये जघन्या विशोधिरनंतगुणा, ततोऽपि तस्मिन्नेव द्वितीयसमये तु उत्कृष्टा विशोधिरनंतगुणा, एवं प्रतिसमये तावद्वाच्यं यावच्चरमसमये उत्कृष्टा विशोधिः, अपूर्वाणि करणानि स्थितिंयावत् रसघातगुणश्रेणिस्थितिबंधादीनां निवर्त्तनानि यस्मिन् तत् अपूर्वकरणं । तथाहि अपूर्वकरणे प्रविशन् प्रथमसमय एव स्थितिघातं रसघातं गुणश्रेणिस्थितिबंधं चान्यं युगपदारभते, तत्र स्थितिघातः स्थितिसत्कर्मणोऽग्रिमभागादुत्कर्षतः उदधिपृथक्त्वप्रमाणं, जघन्येन पुनः पल्योपमसंख्येयभागमात्रं, स्थितिकंडकमुत्किरिति उत्कार्यं च या स्थितिः अधो न खंडयिष्यति तत्र तद्दलिकं प्रक्षिपति, अंतर्मुहूर्त्तेन कालेन तत् स्थितिकंडकं उत्कार्यते एवं द्वितीयं, एवं तृतीयं, एवं प्रभूतानि स्थितिखंडसहस्राणि व्यतिक्रामंति, तथा च सति यत् अपूर्वकरणस्य प्रथमसमये स्थितिः सत्कर्मा आसीत् तत्तस्यैव चरमसमये संख्येयगुणहीनानां जातं । रसघाते तु अशुभानां प्रकृतीनां यत् अनुभागसदनुभागसत्कर्म तस्य अनंततमं भागं मुक्त्वा शेषान् अनंतानुभागभागान् अंतिमवृत्तेन विनाशयति, ततः पुनरपि तस्य प्रागुक्तस्यानंततमं भागं मुक्त्वा शेषान् विनाशयति, एवं अनेकानि अनुभागखंडसहस्राणि एकस्मिन् स्थितिखंडे व्यतिक्रामंति, तेषांच स्थितिखंडानां सहस्रैः द्वितीयमपूर्वकरणं परिसमाप्यते । स्थितिबंधाद्धा तु अपूर्वकरणस्य प्रथमसमये अन्य एव अपूर्वपल्योपमसंख्येयभागहीनस्थितिबंधः आरभ्यते । जीर्णस्थितिघातस्थितिबंधौ तु युगपदारभ्येते । युगपदेव निष्ठां यातः गुणश्रेणीषु । यथा ।

**गुणसेढीनिरक्खेवो, समए समए असंखगुणणाए । अद्धादुग्गइरित्तो सेसेसेसे य निक्खेवो ॥ १ ॥**

भावना च घात्यस्थितिखंडमध्याद्दलिकं गृहीत्वा उदयसमयात् प्रतिमसयं असंख्येयगुणतया निक्षिपति प्रथमसमये स्तोकं, द्वितीयसमये असंख्येयगुणं, तृतीयसमये असंख्येयगुणं, एवं यावच्चरमसमयः। एष प्रथमसमयगृहीतदलकनिक्षेपविधिः, एवं द्वितीयादिसमयगृहीतानां अपि, इत्यनेन प्रथमसमये स्तोकः, द्वितीयसमये असंख्येयगुणः, तृतीयसमये असंख्येयगुणः, गुणश्रेणिदलिकनिक्षेपो भवति। इति अपूर्वकरणस्वरूपं। अनिवृत्तिकरणे एतदुक्तं भवति–अनिवृत्तिकरणस्य प्रथमसमये ये वर्तंते ये च वृत्ताः येच वर्त्तिष्यंते तेषां सर्वेषामपि समाना एकरूपा विशोधिः, द्वितीयसमयेपि ये वर्त्तते येच वृत्ताः येच वर्त्तिष्यंते तेपामपि समा विशोधिः, एवं सर्वेष्वपि समयेषु, नवरं–पूर्वतः उपरितने अनंतगुणाधिका विशोधिः। चरमसमयं यावत्, अस्मिन् करणे प्रविष्टानां तुल्यकालानामसुमतां परस्परमध्यवसायानां या निवृत्तिर्व्यावृत्तिः सा न विद्यते इत्यनिवृत्तिकरणं अनिवृत्तिकरणे यावंतः समयास्तावंति अध्यवसायस्थानानि पूर्वस्मात् पूर्वस्मात् अनंतगुणवृद्धानि भवंति अनिवृत्तिकरणाद्धाया संख्येयेषु भागेषु सत्सु एकस्मिंश्च भागे संख्येयतमे शेषे तिष्ठति अंतर्मुहूर्त्तमात्रमधोमुक्त्वा मिथ्यात्वस्यांतरकरणं करोति अंतरकरणकालश्चांतमुहूर्त्तप्रमाणः अंतरकरणे च क्रियमाणे गुणश्रेणेः संख्येयतमं भागं उत्किरति उत्कीर्यमाणं च दलिकं प्रथमस्थितौ द्वितीयस्थितौ च प्रक्षिपति एवं उदीरणाआगावलेन मिथ्यात्वोदयं निवार्य औपशमिकं सम्यक्त्वंलभते। उक्तंचः—

मिच्छनुदये झीणे लइइ संमतमोवसमीयं। सोलंभेण जस्स लब्भइ आयहियं अलद्धपूवजं ॥ १ ॥

मिथ्यात्वस्योदये क्षीणे सति स जीव उक्तेन प्रकारेण औपशमिकं सम्यक्त्वं लभते यस्य सम्यक्त्वस्य लाभेन यदात्महि-

तमलब्धपूर्वमर्हदादितत्वप्रतिपत्त्यादि तल्लभते । तथाहि सम्यक्त्वलाभे सति जात्यंधस्य पुंसः चक्षुर्लाभे सति एवं जंतोः यथावस्थितवस्तुतत्त्वावलोको भवति महाव्याध्यभिभूतस्य व्याध्यपगमे इव महांश्च प्रमोदः । अत्र अनिवृत्तिकरणे क्रियमाणे यदि पुंजत्रयं करोति तदा प्रथमं क्षयोपशमं सम्यक्त्वं लभते अकृतत्रिपुंजः प्रथमं उपशमसम्यक्त्वं लभते इति सिद्धांताशयः । कार्मग्रंथमते तु प्रथमं उपशममेव लभते अयं च त्रिपुंजीकरण उपशमे करोति इति ग्रंथिभिद् ज्ञानं तत्त्वोपयोगलक्षणं तस्य अन्यविकल्पैः किं ॥ ६ ॥

**मिथ्यात्वशैलपक्षच्छिद्, ज्ञानदंभोलिशोभितः । निर्भयः शक्रवद् योगी, नंदत्यानंदनंदने ॥ ७ ॥**

व्या०—मिथ्यात्वेति 'योगी' रत्नत्रयरूपमोक्षोपायी आनंदनंदने आनंदः आत्मानंदः स एव नंदनं आनंदनंदनं तस्मिन् आनंदनंदने, नंदति क्रीडां करोति, किंवत्? शक्रवत् इंद्रवत् कथंभूतः योगी? 'मिथ्यात्वशैलपक्षच्छिद्-ज्ञानदंभोलिशोभितः' मिथ्यात्वं विपर्यासरूपं तदेव शैलः पर्वतः तस्य पक्षच्छेदनकृत् यद् ज्ञानं तदेव दंभोलिः तेन शोभितः, इत्यनेन मिथ्यात्वभेदकज्ञानवज्रान्वितः सम्यग्दर्शनज्ञानचारित्रपरिणतः योगी आनंदनंदने नंदति शुद्धात्मानंदने नंदति ॥ ७ ॥

**पीयूषमसमुद्रोत्थं, रसायनमनौषधम् । अनन्यापेक्षमैश्वर्यं, ज्ञानमाहुर्मनीषिणः ॥ ८ ॥**

**॥ इति ज्ञानाष्टकम् ॥**

व्या०—पीयूषमिति, असमुद्रोत्थं पीयूषं अमृतं, अनौषधं औषधरहितं रसायनं जरामरणनिवारकं, अनन्यापेक्षं

अन्यत् परवस्तु तस्य अपेक्षया रहितं ऐश्वर्यं आश्चर्यमिति पाठे आश्चर्यं चमत्कारि ज्ञानं, स्वपरावभासनलक्षणं आहुः मनीषिणः पंडिता, इत्यनेन वस्तुतः मरणवारकं सर्वरोगमुक्तिहेतु रसायनं ज्ञानं, वस्तुतः अवलोकनचमत्कारि ज्ञानं, इत्येवं आत्मज्ञानं परमं उपादेयज्ञानं यथाविबोधपरभावत्यागलक्षणं स्मृतं, इत्यनेन अनादिपरभावपरिणतस्य मिथ्यात्वाज्ञानासंयममोहितस्य परभावोत्पन्नात्मरोधकपरिणति तत्त्वत्वेनांगीकुर्वन् परभावमोहितः भ्रमति सूक्ष्मनिगोदादिचतुर्दशसु जीवस्थानेषु, स च तत्त्वज्ञानामृतपरिणतः आत्मामिथ्यात्वादिदोषान् विहाय सम्यग्दर्शनज्ञानचारित्रकोटिमारूढः स्वरूपावभासानंदी सर्वदोषरहितः भवति, अतएवामृतं रसायनज्ञानं तदर्थमेवोद्यमः कार्यः

॥ इति व्याख्यातं ज्ञानाष्टकम् ॥

अथ पंचमज्ञानाष्टककथनानंतरं षष्ठं शमाष्टकं प्रारभ्यते, ज्ञानी हि ज्ञानात् क्रोधादिभ्य उपशाम्यति, अतः शमाष्टकं विस्तार्यते, तत्र आत्मनः क्षयोपशमाद्याः परिणतयः स्वभावपरिणामेन परिणमंति न तद्यादिपरिणतौ स शमः, नामशमस्थापनाशमौ सुगमौ द्रव्यशमः परिणत्यसमाधौ प्रवृत्तिसंकोचः द्रव्यशमः आगमतः शमस्वरूपपरिज्ञानी अनुपयुक्तः नो आगमतः मायया लब्धिसिद्ध्यादिदेवगत्याद्यर्थं उपकारापकारविपाकक्षमादिक्रोधोपशमत्वं इत्यपि द्रव्यशमः भावतः उपशमस्वरूपोपयुक्तः आगमतः नो आगमतमिथ्यात्वमपहाय यथार्थभासनपूर्वकचारित्रमोहोदयाभावात् क्षमादिगुणपरिणतिः शमः, सोऽपि लौकिकलोकोत्तरभेदात् द्विविधः, लौकिकं वेदांतवादिनां, लोकोत्तरं जैनप्रवचनानुसारिशुद्धस्वरूपरमणैकत्वं, आद्यनयचतुष्टये भावक्षमादिस्वरूपगुणपरिणमनहेतुः मनोवाक्कायसंकोचविपाकचिंतनतत्त्वज्ञानभावनादिः, अंत्य-

नयत्रये क्षयोपशमक्षमादिः शब्दनयेन क्षपकश्रेणिमध्यवर्त्तिसूक्ष्मकषायवतः समभिरूढनयेन क्रोधादिशमः क्षीणमोहादिषु एवंभूतनयेन कषायशमः । अत्र भावना । चिंतास्मृतिविपाकभयादिकारणतः क्षयोपशमभावादिसाधनतः क्षायिकशमः साध्यः एवं शमपरिणतिः करणीया आत्मनः मूलस्वभावत्वात् मूलधर्मपरिणमनं हि तेनैव कारणेन शुद्धात्मपदप्रवृत्तिः संगत्यागात्मध्यानसंवरीचंचरीकत्वं करणीयंः—

**विकल्पविषयोत्तीर्णः, स्वभावालंबनः सदा । ज्ञानस्य परिपाको यः, स शमः परिकीर्त्तितः ॥ १ ॥**

व्या०—विकल्प इति, विकल्पः चित्तविभ्रमः, तस्य विषयः विस्तारः, तेन उत्तीर्णः निवृत्तः आत्मास्वादनतः वर्णादिषु निवृत्तविषयः स्वभावः अनंतगुणपर्यायसम्यग् ज्ञानदर्शनचारित्रस्वरूपः, तस्य आलंबनः स्वभावालंबनः इत्यनेन आत्मस्वभावदर्शी, आत्मस्वभावज्ञानी, आत्मस्वभावरमणी, आत्मस्वभावविश्रामी, आत्मस्वभावास्वादी, शुद्धतत्त्वपरिणतः, ज्ञानस्य आत्मोपयोगलक्षणस्य यः परिपाकः प्रौढावसरः स शमः शमभावलक्षणः परिकीर्त्तितः, अत्र योगस्य पंचविधत्वं प्रोक्तं हरिभद्रपूज्यैः अध्यात्मयोगः १ भावनायोगः २ ध्यानयोगः ३ शमतायोगः ४ वृत्तिक्षययोगः ५, तत्र अनादिपरभावं औदयिकभावरमणीयताधर्मत्वेन निर्धार्य तत्पुष्टिहेतुक्रियां कुर्वन् अधर्मेधर्म वृत्त्या इच्छन् प्रवृत्तः स एव निरामयः निःसंगशुद्धात्मभावनाभावितांतःकरणस्य स्वभावएव धर्म इति योगवृत्त्या अध्यात्मयोगः १ सर्वपरभावान् अनित्यादिभावनया विबुध्य अनुभवभावनया स्वरूपाभिमुखयोगवृत्तिमध्यस्थः आत्मानं मोक्षोपाये युंजन् भावनायोगः २ स एव पिंडस्थपदस्थरूपातीतध्यानपरिणतरूपैकत्वी ध्यानयोगी भण्यते ३ ध्यानबलेन भस्मीभूतमोहकर्मा तत्त्वादि-

परिणतिरहितः शमतायोगी उक्तः ४ तथा योगाधीनकर्मोदयाधीना अनादिवृत्तिः जीवस्य तस्याः क्षयः अभावः स्वरूपवृत्तिः वृत्तिक्षययोगी उच्यते ५ एवं पंचयोगेषु शमतायोगी साधने परिष्ट इति ज्ञानस्य पूर्णावस्थाशमः ॥ १ ॥

**अनिच्छन् कर्मवैषम्यं, ब्रह्मांशेन शमं जगत् । आत्माभेदेन यः पश्येदसौ मोक्षंगमी शमी ॥ २ ॥**

व्या०—अनिच्छन् कर्मेति, कर्मवैषम्यं ऊनाधिकत्वं अनिच्छन् गतिजातिवर्णसंस्थानब्राह्मणक्षत्रियादि वैषम्यं ज्ञानवीर्यक्षयोपशमकार्यवैषम्यं अनिच्छन् उदयतः आवरणतः क्षयोपशमभेदे सत्यपि ब्रह्मांशेन चेतनालक्षणेन, अथवा द्रव्यास्तिक–अस्तित्ववस्तुत्वसत्व–अगुरुलघुत्वप्रमेयत्वचेतनत्वअमूर्त्तत्व–असंख्येयप्रदेशत्व–परिणत्या जगत् चराचरं आत्माभेदेन आत्मतुल्यवृत्त्या समानत्वेन यः पश्येत् सर्वजीवेषु समत्वं कृत्वा आरक्तद्विष्टत्वेन वर्त्तमानः असौ योगी मोक्षगामी सकलकर्मक्षयलक्षणावस्थां गच्छतीत्येवं शीलः भवति, यः हि सर्वजीवेषु जीवत्वतुल्यवृत्त्या रागद्वेषपरिणतिमपहाय आत्मस्वभावानुषंगी असौ योगी मोक्षंगमी भवति ॥ २ ॥

**आरुरुक्षुर्मुनिर्योगं, श्रयन् बाह्यक्रियामपि । योगारूढः शमादेव, शुध्यत्यंतर्गतक्रियः ॥ ३ ॥**

व्या०—आरुरुक्षुरिति, आरुरुक्षुः आरोहणेच्छुः, मुनिः भावसाधकः, प्रीतिभक्तिवचनरूपशुभसंकल्पेन अशुभसंकल्पात् वारयन् आराधकः भवति, सिद्धयोगी तु रागद्वेषाभावेन उपशमी कृतार्थः, बाह्यां क्रियां बाह्याचारप्रतिपत्तिं श्रयन् अपि अंगीकुर्वन् अपि शमादेव शुध्यति शमात् क्रोधाभावात् शुध्यति निर्मलीभवति, कथंभूतः मुनिः ? योगारूढः योगे सम्यग्दर्शनज्ञानचारित्रे आत्मीयसाधनरत्नत्रयीलक्षणे आरूढः, पुनः कथंभूतः मुनिः ? अंतर्गतक्रियः अंतर्गता

वीर्यगुणप्रवृत्तिरूपा क्रिया यस्य सः अंतगर्तक्रियः एवमभ्यंतरक्रियावान् रत्नत्रयपरिणतः शमात् क्षमायाः मार्दवार्जवमुक्तिपरिणतिपरिणतः निर्मलो भवति ॥ ३ ॥

ध्यानवृष्टेर्दयानद्याः, शमपूरे प्रसर्पति । विकारतीरवृक्षाणां, मूलादुन्मूलनं भवेत् ॥ ४ ॥

व्या०—ध्यानवृष्टेरिति ध्यानवृष्टेः ध्यानं धर्मशुक्लाख्यं, अंतर्मुहूर्त्तं यावत् चित्तस्य एकत्रावस्थानं ध्यानं । उक्तंचः—

अंतोमुहुत्तमित्तं, चित्तावत्थाणमेगवत्थुमि । छउमत्थाणं झाणं जोगनिरोहो जिणाणं तु ॥ १ ॥

अत्र च निमित्तरूपे देवगुरुस्वरूपे अद्‌भुततादियुक्तचित्तैकत्वे धर्मध्यानं आज्ञाऽपायविपाकस्थानाख्यं, तत्र आज्ञायाः निर्द्धारः सम्यग्‌दर्शनं आज्ञाया अनंतत्वपूर्वापराविरोधित्वादिस्वरूपे चमत्कारपूर्वकचित्तविश्रामः आज्ञाविचयधर्मध्यानं, एवं अपायादिकेष्वपि, निर्द्धारभासनपूर्वसानुभवचित्तविश्रांतिः ध्यानं एवं शुक्लेऽपि ईदृग् ध्यानवृष्टेः मेघात् दया स्वपरभावप्राण—आघातनरूपा भावदया, तद्‌बुद्धितल्लक्षणहेतुत्वात् स्वपरद्रव्यप्राणरक्षणानिर्विषयत्वेन द्रव्यदयापि दयात्वेन आरोपिता, श्रीविशेषावश्यके गणधरवादाधिकारे इति । अतः द्रव्यदया तु कारणरूपा, भावदयातु दयाधर्मः, एवंविधाया दयानद्याः शमपूरे सकलकषायपरिणतिशांतिः शमः रागद्वेषाभावः वचनधर्मरूपः शमः तस्य पूरः, तस्मिन् प्रसर्पति वृद्धिमति सति विकाराः कामक्रोधादयः अशुद्धात्मपरिणामाः त एव तीरवृक्षाः तेषां मूलात् उन्मूलनं भवेत् उच्छेदनं भवेत् अभावः इत्यनेन ध्यानयोगतः दयानदीपूरः प्रवर्द्धते वर्द्धमानपूरश्च विकारवृक्षाणां उच्छेदनं करोत्येव

अयं हि आत्मा विषयकषायविकारविप्लुतः स्वगुणावरककर्मोदयतः परिभ्रमति स एव स्वरूपोपादानतः तत्वैकत्वतया प्रवर्द्धमानशमपूरः विकारान् मूलात् उन्मूलयति ॥ ४ ॥

**ज्ञानध्यानतपःशील—सम्यक्तसहितोऽप्यहो । तं नाऽप्नोति गुणं साधुर्यमाप्नोति शमान्वितः ॥ ५ ॥**

व्या०—ज्ञानध्यानेति-ज्ञानं तत्वाववोधः, ध्यानं परिणामस्थिरतारूपं, तपः इच्छानिरोधः, शीलं ब्रह्मचर्यं, सम्यक्त्वं तत्वश्रद्धानं, पदानां उत्क्रमता द्वंद्वसमासात्, इत्यादि गुणोपेतः साधुः साधयति रत्नत्रयकरणेन मोक्षं स साधु तं निरावरणगुणं केवलज्ञानादिगुणं नाप्नोति न प्राप्नोति यं गुणं शमान्वितः शमताचारित्रमयः आप्नोति प्राप्नोति लभते इत्यर्थः । अत्र ज्ञानादयो गुणा निरावरणाऽमलकेवलज्ञानस्य परंपराकारणं शमः कषायाभावः, यथाख्यातसंयमः केवलज्ञानस्यासन्नकारणं, अस्वकरणसमीकरणकिट्टीकरणवीर्येण सूक्ष्मलोभं खंडशः कृत्वा क्षयं नीते सति निर्विकल्पसमाधौ अभेदरत्नत्रयीपरिणतिः क्षीणमोहावस्थायां यथाख्यातचारित्री परमशमान्वितः ज्ञानावरणदर्शनावरणांतरायक्षयं नयति, लभते च सकलामलकेवलज्ञानं केवलदर्शनं परमदानादिलब्धीः, अतएव क्षयौपशमिकज्ञानी यं न प्राप्नोति तं परमशमान्वितः प्राप्नोति अत एव धीराः दर्शनज्ञाननिपुणाः अभ्यस्यंति पूर्वाभ्यासं, आश्रयंति गुरुकुलवासं रमंते निर्जने वने, तेन आत्मविशुध्यर्थी शमपूरणे उद्यतते ॥ ५ ॥

**स्वयंभूरमणस्पर्धि—वर्द्धिष्णुशमतारसः । मुनिर्येनोपमीयेत, कोऽपि नासौ चराऽचरे ॥ ६ ॥**

व्या०—स्वयंभू इति—स्वयंभूरमणः अर्द्धरज्जुप्रमाणः प्रांतसमुद्रः, तस्य स्पर्द्धी स्पर्धाकारी, वर्द्धिष्णुः वर्द्धमानः, 'शम-

तारसः, शमता रागद्वेषाभावः, तस्या रसः यस्य सः एवंविधः मुनिः, त्रिकालाविषयी, अतीतकालरमणीयविषयस्मरणाभावः, वर्त्तमानेंद्रियगोचरप्राप्तविषयरमणाभावः, अतीतकालमनोज्ञविषयेच्छाभाववान् मुनिः, येन उपमानेन उपमीयते चराचरे विश्वे असौ कोऽपि न जगति, यतस्तत्सर्वं अचेतनपुद्गलस्कंधजं मूर्त्तं च, तत् समतारसेन सहजात्यंतिकनिरुपमचरितशमभावस्वरूपेण कथं उपमीयते दुर्लभो हि शमतारसः विश्वविश्वशुभाशुभभावे परत्वेन अरक्तद्विष्टतया वृत्तिशुद्धात्मानुभवः । उक्तंचः—

वंदिज्जमाणा न समुल्लसंति, हेलिज्जमाणा न समुज्जलंति ।
दंतेण चित्ते न चलंति धीरा, मुणी समुग्घाईयरागदोसा ॥ १ ॥
बालाभिरामे सु दुहावलेसु, नतं सुहं कामगुणेसु रायं ।
विरत्तकामाणतवोधणाणं जं भिरकुणो सीलगुणे रयाणं ॥ २ ॥

इति शमतास्वादिनां नरेशभोगाः रोगाः, चिंतामणिससूहाः कर्करव्यूहाः, वृंदारकाः दारका इव भासंते, अतः संयोगजा रतिर्दुःखं शमतैव महानंदः ॥ ६ ॥

शमसूक्तसुधासिक्तं, येषां नक्तंदिनं मनः । कदाऽपि ते न दह्यंते, रागोरगविषोर्मिभिः ॥ ७ ॥

व्या०—शमसूक्त इति—येषां महात्मनां मनः चित्तं शमः कषायाभावः चारित्रपरिणामः तस्य सूक्तानि सुभाषितानि

तान्येव सुधा अमृतं तेन सिक्तं अभिषिक्तं नक्तंदिनं अहोरात्रं ते रागोरगविषोर्मिभिः रागः अभिष्वंगलक्षणः स एव उरगः सर्पः तस्य विषस्य ऊर्मयः तैः शमतासिक्ता न दह्यंते, जगद्जीवा रागाहिदष्टाः, विषोर्मिघूर्मिताः भ्रमंति, इष्टसं-योग—अनिष्टवियोगचिंतया, विकल्पयंति बहुविधान् अग्रशोकादिकल्पनाकल्लोलान्, संगृह्णंति अनेकान् जगदुच्छिष्टान पुद्गलस्कंधान्, याचयंति अनेकान् धनार्जनोपायान्, प्रविशंति कूपेषु, विशंति यानपात्रेषु, द्रव्याद्यहितं हितवत् मन्य-मानाः, जगदुपकारितीर्थंकरवाक्यश्रवणप्राप्तशमताधनाः स्वरूपानंदभोगिनः स्वाभावभासनस्वभावरमणस्वभावानुभवेन सदा असंगमग्ना विचरंति, आत्मगुणानंदवने, अतः सर्वपरभावैकत्वं विहाय रागद्वेषविभावमपहाय शमतावत्त्वेन भवनीयम् ७

गर्जद्ज्ञानगजोत्तुंग—रंगद्ध्यानतुरंगमाः । जयंति मुनिराजस्य, शमसाम्राज्यसंपदः ॥ ८ ॥

इति शमाष्टकम् ॥ ६ ॥

व्या० गर्जद्ज्ञानमिति, मुनिराजस्य शमसाम्राज्यसंपदः जयंति कथंभूताः संपदः ? गर्जद् ज्ञानगतोत्तुंगरंगद्ध्यान-तुरंगमाः गर्जत् स्फुरद् ज्ञानं स्वपरावभासनरूपं तद्रूपाः गजाः तैः उत्तुंगा उन्नताः रंगत् नृत्यत् ध्यानं तद्रूपाः तुरंगमाः अश्वाः यासु ताः, इत्यनेन भासनगजध्यानाश्वशोभिताः राज्यसंपदः निर्ग्रंथस्वरूपभूपस्य जयंति, अतः शमतास्पदमुनीनां महाराजत्वं सदैव जयति, अतः शमाभ्यासवता भवितव्यं इत्युपदेशः ॥ ८ ॥

इति व्याख्यातं शमाष्टकम् ॥ ६ ॥

## अथ इंद्रियजयाष्टकम् ।

शमांतरायकृत् इंद्रियजयाभिलाषः, तेन इंद्रियजयादेव शमावस्थानं, अतः इंद्रियजयाष्टकं विस्तार्यते । तत्र इंद्रो जीवः, सर्वपरमैश्वर्ययोगात्, तस्य लिंगमिंद्रियं लिंगनात् सूचनात् प्रदर्शनादुपलंभाद् व्यंजनाच्च जीवस्य लिंगमिंद्रियं, इंद्रियविषयोपलंभात् ज्ञापकत्वसिद्धिः, तत्सिद्धौ 'उवओगलक्खणो जीवो' इति जीवनसिद्धिः, द्विविधानि इंद्रियाणि द्रव्येंद्रियाणि भावेंद्रियाणि च, तत्र द्रव्येंद्रियं द्विविधं, निर्वृतींद्रियं उपकरणेंद्रियं च तत्र निर्वृतिः अंगोपांगानां निर्वृतानि इंद्रियद्वाराणि कर्मविशेषसंस्कृताः शरीरप्रदेशाः निर्वाणनामांगोपांगप्रत्यया उपकरणं बाह्यमाभ्यंतरं च निर्वृतिः तस्यानुपघातानुग्रहाभ्यामुपकरोति लब्धिः उपयोगस्तु भावेंद्रियं भवति लब्धिः तदावरणीयमतिज्ञानावरणीयश्रुतज्ञानावरणीयचक्षुर्दर्शनावरणीयवीर्यांतरायकर्मक्षयोपशमजनिता, स्पर्शादिग्राहकशक्तिः लब्धिः स्पर्शादिज्ञानं उपयोगः स्पर्शादिज्ञानफलरूपउपयोगः । अत्र इंद्रियाणां वरणादिज्ञानेन विषयता, किंतु ज्ञानमग्नानां तेषु वरणादिषु मनोज्ञामनोज्ञेषु इष्टानिष्टतया भूत्वा इष्टाभिमुख्यताऽनिष्टकंपनारूपा मोहपरिणतिः विषयताज्ञानस्य सविषयत्वेन सिद्धानां स्वविषयताप्तेः, अतः रक्तद्विष्टतया प्रवर्त्तमानं ज्ञानं विषयः कारणकार्ये एकता चारित्रमोहोदयेन अरम्ये रमणं असंयमः, तत्र वर्णा ( वरणा ) दयो हि ज्ञेयाः एव न रम्यात् तत्र रमणी विषयेंद्रियद्वारप्रवृत्तज्ञानस्य इष्टानिष्टतया परिणमनं तस्य जयः इंद्रियविषयजयः, किमित्याह इति यद् द्वारेण वर्णा ( वरणा )-दीनां ज्ञानं न इष्टानिष्टता इंद्रियजयः, अनाद्यशुद्धासंयमपरिणतिवारणारूपः, तत्र ज्ञानं हि आत्मनः स्वलक्षणत्वात्

स्वपरपरिच्छेदः विधिः इष्टानिष्टतानुविभाव एव संगांगितया अनादिसंततिजः अशुद्धपरिणामः सर्वथा त्याज्यः, अतएव इंद्रियं जयितव्यं, तत्र द्रव्यजयः संकोचादिलक्षणः, भावजयः चेतनावीर्ययोः स्वरूपानुपातः । नैगमेन निर्वृत्युपकरणेंद्रियपरिणमनयोग्याः पुद्गलस्कंधाः, संग्रहेण जीवपुद्गलौ, व्यवहारतः निर्वृत्युपकरणेंद्रियपरिणतिनिर्माणादिविपाकजानि इंद्रियसंस्थानानि, ऋजुसूत्रेण स्वस्वविपयग्रहणोत्सुकौ निर्वृत्युपकरणौ, शब्दनयेन संज्ञाग्रहमिता लब्धिः उपयोगपरिणतिवृत्तिः, समभिरूढनयेन संज्ञागृहीताऽगृहीतविपयक्षेत्रप्राप्तविषयपरिच्छेदः, एवंभूतनयेन मतिश्रुतचक्षुरचक्षुर्वीर्यांतरायाणां क्षयोपशमावधेः प्रांतं यावद्ज्ञानं, तत्रासंयतस्येष्टानिष्टयुक्त एवावबोधो भवति, तेन विपयः इति संज्ञाभोक्तृत्वाशुद्धता आत्मनः अशुद्धपरिणामः, तस्य जयः सोऽपि आद्यनयचतुष्टये कारणरूपशब्दादिषु संयमगुणप्रागूभावानुगतचेतनादिपरिणामः द्रव्यजयोऽपि भावजयहेतुत्वात् अभ्यस्यः, भावजयस्तु स्वधर्मत्वात् साध्य एव तदर्थमुपदेशः—

**बिभेषि यदि संसारान्मोक्षप्राप्तिं च कांक्षसि । तदेंद्रियजयं कर्त्तुं, स्फोरय स्फारपौरुषम् ॥ १ ॥**

व्या० बिभेषि यदीति—हे भव्य! यदि त्वं संसारात् विभेषि भयं प्राप्नोऽषि, च पुनः मोक्षः सकलकर्मक्षयलक्षणः तस्य प्राप्तिं तां कांक्षसि अभिलषसि, तदा इंद्रियजयं कर्तुं स्फारपौरुपं देदीप्यमानं पराक्रमं स्फोरय प्रवर्त्तयस्व, अतः महाकदर्थनारूपात् भवकूपादुद्विग्नः शुद्धचिदानंदाभिलाषी जीवः हालाहलोपमान् इंद्रियविषयान् त्यजति। उक्तं च उत्तराध्ययने—

**सल्लं कामा विसं कामा कामा आसीविसोपमा । कामे पत्थेमाणा अकामा जंति दुग्गइं ॥ १ ॥**

**वृद्धास्तृष्णाजलापूर्णैरालवालैः किलेंद्रियैः । मूर्छामतुच्छां यच्छन्ति, विकारविषपादपाः ॥ २ ॥**

व्या० वृद्धाः इति । किल इति सत्ये, इंद्रियैः विषयभोगरसिकैः आलवालैः वृद्धाः महत्त्वमापन्नाः, विकारविषपादपाः विकारा इव ( एव ) विषवृक्षाः अतुच्छां अत्यंतां मूर्छां यच्छंति मुह्यतां ददति, इत्यनेन अनादिस्वरूपयुतानां परभावरमणाभोग्याभोग्याचेतनानां विकारविषवृक्षाः इंद्रियैः स्पर्शनादिभिः विषयग्राहकैः प्रवर्द्धमानाः महामोहं कुर्वंति, किंभूतैः आलवालैः ? तृष्णाजलापूर्णैः तृष्णा लोभवैकल्यं, लालसा, तद्रूपेण जलेन आपूर्णैः भृतैः इत्यर्थः तृष्णाप्रेरिता एव इंद्रियाश्वा धावंति, तृष्णाया आनंत्यं—

सुवन्नरुप्पस्स य पव्वया भवे सिया हु कैलाससमा असंखया ।
नरस्स बुलुद्धस्स न हुंति किंचि इच्छा हु आगाससमा अणंतया ॥ १ ॥
वारमणंतं भुत्ता वंता चत्ताय धीरपुरुसेहिं । ते भोगा पुण इच्छइ भोतुं तिण्हाउलो जीवो ॥ २ ॥

तृष्णाकुलस्यैव विषयाः रमणीयाः साच अनाद्यभ्यासतः विषयप्रसंगेन वर्द्धते अतः इंद्रियपरित्यागः युक्तः ॥२॥

सरित्सहस्रदुःपूर–समुद्रोदरसोदरः । तृप्तिमान्नेंद्रियग्रामो, भव तृप्तोऽतरात्मना ॥ ३ ॥

व्या० सरित्सहस्रेति—हेभव्य ! अयं इंद्रियग्रामः तृप्तिमान् न, कदापि तृप्तिं न लभते, यतः अभुक्तेषु ईहा, भुज्यमानेषु ममता, भुक्तपूर्वेषु स्मरणं, इति त्रैकालिकी अशुद्धा प्रवृत्तिः, इंद्रियार्थरक्तस्य तेन तृप्तिः, कथंभूतः इंद्रियग्रामः "सरित्सहस्रदुःपूरसमुद्रोदरसोदरः" सरितां सहस्रं तेन दुःपूर्यते समुद्रस्योदरः तस्य सोदरः, सहस्रश नदीपूरैः दुःपूर

अपूर्यमाणः यः समुद्रस्य जलनिधेः उदरः तस्य सोदरः भ्राता अतः कारणात् पूर्यमाणोऽपि दुःपूरः इंद्रियाभिलाषः स शमसंतोषेणैव पूर्यते, तदर्थं हितोक्तिः भोउत्तम ! अंतरात्मना आत्मनः अंतर्गतेन स्वरूपेण तृप्तो भव, स्वरूपावलंबनमंतरेण न तृष्णाक्षयः, अयं हि संसारचक्रक्रोडीभूतपरभावान् आत्मतया मन्यमानः, "शरीरमेवात्मा" इति बहिर्भावे कृतात्मबुद्धिः बहिरात्मा सन् अनंतपुद्गलावर्त्तकालं मोहावगुंठितः पर्यटति, स एव निसर्गाधिगमाभ्यां स्वरूपपररूपविभजनेन "अहं शुद्धः" इति कृतनिश्चयः सम्यग्ज्ञानदर्शनचारित्रात्मकमात्मानमात्मत्वेन जानन् रागादीन् परत्वेन निर्धारयन् सम्यग् दृग् अंतरात्मा उच्यते, स एव सम्यग्दर्शनलाभकाले निर्धारिततत्त्वस्वरूपपूर्णप्राप्तौ परमात्मा परमानंदमयसंपूर्णस्वधर्मप्राग्भावभोगी सिद्धो भवति, तेन मिथ्यात्वमपहाय आत्मस्वरूपभुंजनेन उच्छिष्टमलजंबालोपमान् विषयान् त्यजतिः—

**विसयविसं हालाहलं विसयविसं उक्कडं पीयं । ताणं विसयविसया पिव विसयविसविसुईया हुंति ॥२॥**

**कामभोगग्रहो दुष्टः, कालकूटविषोपमः । तद्व्यामोहनिवृत्त्यर्थमात्मभावोऽमृतोपमः ॥ ३ ॥**

अतः आत्मानुभवनेन तृप्तिं कुरु ॥ ३ ॥

**आत्मानं विषयैः पाशैः भववासपराङ्मुखम् । इंद्रियाणि निबध्नंति, मोहराजस्य किंकराः ॥ ४ ॥**

व्या० आत्मानमिति—भवः संसारः, तस्य वासो निवासः तत्र पराङ्मुखः निवृत्तः उद्विग्नः, तं आत्मानं इंद्रियाणि निबध्नंति, भववासदृढं कुर्वंति, कैः ? विषयपाशैः विषया एव पाशाः तैः, एते मोहराजस्य किंकराः परिवारभूताः, उपमितमोहसुताः जगद्व्यामोहकृत् रागकेशरी तत्प्रधानो विषयाभिलाषः इति भवमूलविषयपरित्यागो हिताय ॥ ४ ॥

**गिरिमृत्स्ना धनं पश्यन्, धावतींद्रियमोहितः । अनादिनिधनं ज्ञानं, धनं पार्श्वे न पश्यति ॥ ५ ॥**

व्या० गिरिमृत्स्नामिति मूढः गिरिमृत्स्नां भूधरमृत्तिकां स्वर्णादिकां धनं पश्यन्, इंद्रियमोहितः विषयासक्तः धावति इतस्ततः परिभ्रमति, ज्ञानं धनं पार्श्वे समीपे न पश्यति, तदात्मा स्वलक्षणभूतं तत्वावबोधरूपं ज्ञानं धनं न पश्यति नावलोकयति, कथंभूतं ज्ञानं ? अनादिनिधनं अनादि आदिरहितं सत्तया अनिधनं अंतरहितं सत्ताविश्रांतिरूपं । उक्तं च—"केवलनाणमणंतं, स भावरूवं तवं निरावरणं" सिद्धत्वेन अविनश्वरत्वात् निगोदावस्थां यावत् ज्ञानं अत्यंतबोधमहामोहोदयेऽपि सत्तागतं सम्यग्दृष्टिदेशविरतिसर्वविरतानां साध्यरूपं निर्विकल्पसमाधिः शुक्लध्यानस्य फलरूपं अर्हत्सिद्धानां परमं स्वरूपं केवलज्ञानं धनं स्वीयं सहजं विस्मृत्य उपाधिकारोपितमृदूपलरूपे धने मुह्यन्ति मूढाः ॥ ५ ॥

**पुरःपुरःस्फुरत्तृष्णा—मृगतृष्णानुकारिषु । इंद्रियार्थेषु धावंति, त्यक्त्वा ज्ञानाऽमृतं जनाः ॥ ६ ॥**

व्या० पुरःपुरइति—जडाः मूर्खाः स्याद्वादवस्तुस्वरूपोपलंभरहिताः ज्ञानामृतं ज्ञानं बोधः तदेव अमृतं अविनाशिपदहेतुत्वात्, तत् त्यक्त्वा इंद्रियार्थेषु रूपरसगंधस्पर्शशब्दलक्षणेषु धावंति, भोगाभिलाषिणः आतुरा भवंति, तदर्थं यत्नः, तदर्थं, दंभविकल्पकल्पना, तदर्थं कृष्यादि कर्म करोति, कथंभूतेषु इंद्रियार्थेषु ? पुरः पुरः स्फुरत्तृष्णामृगतृष्णानुकारिषु, अग्रे स्फुरंती या तृष्णा भोगपिपासा तया, मृगतृष्णा जलभ्रांतिः तदनुकारिषु तत्सदृशेषु, यथा—मृगतृष्णाजलं पिपासापहं भ्रांतिरेव एवमिंद्रियभोगाः न सुखं सुखभ्रांतिरेव तत्वविकलानां ॥ ६ ॥

**पतंगभृंगमीनेभ—सारंगा यांति दुर्दशाम् । एकैकेंद्रियदोषाच्चे—दुष्टैस्तैः किं न पंचभिः? ॥ ७ ॥**

व्या० पतंगभृंगमीनेति—रूपासक्तः पतंगः, रसासक्तः मीनः, गंधासक्तः भृंगः भ्रमरः, स्पर्शासक्तः इभः गजः, शब्दासक्तः मृगः सारंगः, एते एकैकेंद्रियदोषात् दुर्दशां दुष्टां दीनां दशां अवस्थां यांति, तदा तैः पंचभिः दुष्टैः किं न इति किं दुःखं न भवति? भवत्येव, अतएव महाचक्रधरा वासुदेवाः मंडलिकादयः कंडरिकादयश्च विषयव्यामोहितचित्ताः नरके दीनावस्थां प्राप्ताः, किं बहुना? माकुरुध्वं विषयविषसंगमं ॥ ७ ॥

**विवेकद्विपहर्यक्षैः, समाधिधनतस्करैः । इंद्रियैर्न जितो योऽसौ, धीराणां धुरि गण्यते ॥ ८ ॥**

व्या० विवेकेति—विवेकः स्वपरविवेचनं, स एव द्विपः गजः, तद्विघाते हर्यक्षतुल्यैः सिंहोपमैः, समाधिः स्वरूपानुभवलीलाविश्रांतिः, स एव धनं सर्वस्वं, तदूहरणे तस्कराभैः, एवं इंद्रियैः यः असौ पुरुषः नमि—गजसुकुमालादिना सह सः न जितः इंद्रियाधीनो न जातः सः धीराणां धुरि आदौ गण्यते श्लाघ्यते । उक्तंचः—

**धन्यास्ते ये विरक्ता गुरुवचनरतास्त्यक्तसंसारभोगाः योगाभ्यासे विलीना गिरिवनगहने यौवनं ये नयंति**
**तेभ्यो धन्या विशिष्टाः प्रबलवरवधूसंगपंचाग्नियुक्ताः नैवाक्षौघे प्रमत्ताः परमनिजरसं तत्वभावं श्रयंति १**

अहह पूर्वभवास्वादितसाम्यसुखस्मरणेन प्रणयंति अनुत्तरविमानसुखलवसत्तमाः इंद्रादयोहि विषयस्वादत्यागासमर्थाः लुठंति भूपीठे मुनीनां चरणकमलेषु, अतः अनाद्यनेकशः भुक्तविषयाः वारणीयाः, तत्संगोऽपि न विधेयः, न स्मरणीयः पूर्वपरिचयः, प्रतिसमयं दुगंछनीया एव एते संसारबीजभूताः इंद्रियविषयाः, अतएव निर्ग्रंथा निवर्त्तयंति कालं वाचना-

दिना तत्त्वावलोकनेहादिषु । उक्तंच—" निम्मलनिकलनिस्संगसिद्धसज्ज्ञावफासणाकईया " इत्यादिरुच्या रत्नत्रयपरिणताः तिष्ठंति स्थविरकल्पजिनकल्पेषु, सर्वैरपि भव्यैः एतदेव विधेयं ॥ ८ ॥

॥ इति व्याख्यातं इंद्रियजयाष्टकं सप्तमम् ॥

## अथ अष्टमं त्यागाष्टकम् ।

इंद्रियजयो हि त्यागाद् वर्द्धते अतः आत्मनः स्वरूपादन्यत्परभावत्वं त्याज्यं, तेन त्यागाष्टकं लिख्यते, त्यजनं त्यागः सर्वेषां परभावत्यागः सुखं त्यागः उत्सर्जनं तत्र स्वद्रव्यस्वक्षेत्रस्वकालस्वभावत्वेन स्यादस्ति इति प्रथमभंगगृहीतात्मपरिणामस्वात्मनि वर्त्तमानः स्वधर्मः तस्य समवायत्वेनाभेदात् त्यागो न भवति, अस्त्येव तदात्मनि उपादेयत्वंतु सम्यग् ज्ञानादिसाधनवृत्त्या विस्मृतस्य स्मरणात् तिरोभूतस्याविर्भावात् अभुक्तस्य भोगात् शेषाणां सर्वसंयोगिकतया ज्ञानात् हेयतैव यद्यपि देवादिनिमित्तानां शुभाचारादीनां ध्यानादीनांआत्मसाधनपरिणामानां अनाद्यशुद्धपरिणतिग्रहणवृत्तिवारणाय ग्रहणता कृता तथापि स्वसिद्धावस्था त्यागता न इति उत्सर्गमार्गेण न ग्रहणता अनादिमिथ्यादृष्टिः कुदेवादिरक्तः सच सम्यग् दर्शनबलेन निर्धारितस्वधर्मरुचिः शुद्धदेवादीन् गृह्णाति तथापि परत्वज्ञप्तिरेव अप्रशस्तत्यागः प्रशस्तग्रहणं प्रशस्तत्यागः स्वसाधनपरिणतिग्रहणं परमसिद्धे, तत्र नामत्यागः शब्दालापरूपः, स्थापनात्यागः दशयति धर्मपूजनादौ स्थाप्यमानः द्रव्यत्यागः द्रव्येण बाह्यवृत्त्या इंद्रियसुखाभिलाषेण उपयोगभूतेन वा यत्त्यागः द्रव्यत्यागः द्रव्यस्य द्रव्याणां वा

आहारोपधिप्रमुखस्य त्यागः द्रव्यरूपः त्यागः द्रव्यत्यागः सच आगमतः द्रव्यत्यागः स्वरूपज्ञानी अनुपयुक्तः, नो आगमतः ज्ञशरीरं त्यागस्वरूपज्ञायकस्य शरीरं भव्यशरीरं त्यागस्वरूपज्ञायकभावी लघुशिष्यादितद्व्यतिरिक्तसुद्रव्यत्यागः पुद्गलाशंसा—इहलोकाशंसा परलोकाशंसारहितः स्वरूपसाधनाभिमुखी वाह्योपधिशरीरान्नपानस्वजनादित्यागः इति। भावतः आभ्यंतररागद्वेषमिथ्यात्वाद्याश्रवपरिणतित्यागः आत्मनः क्षयोपशमिकानां ज्ञानादीनां परभावतो निवृत्तिः भावत्यागः, सम्यग्ज्ञानपूर्वकचारित्रवीर्यसंकरजन्यः आत्मपरिणामः नामस्थापनां यावत् नैगमसंग्रहौ व्यवहारविपगरानुष्ठानेन ऋजुसूत्रेण कटुविपाकभीत्या शब्दसमभिरूढौ तद्धेतुतया एवंभूतत्यागः सर्वथावर्जनं वर्जनीयत्वेन अथवा अशनादिबाह्यरूपं आद्यनयचतुष्टये आभ्यंतरस्त्यागः शब्दादिनयत्रये इति भावना स त्यागः करणीय इत्युपदिश्यतेः—

संयमात्माश्रयेच्छुद्धोपयोगं पितरं निजम्। धृतिमंबां च पितरौ तन्मा विसृजतं ध्रुवम् ॥ १ ॥

व्या० संयतात्मा इति—संयतात्मा संयमाभिमुखी शुद्धोपयोगं निजपितरं श्रयेत्, रागद्वेषरहित आत्मज्ञानं श्रयेत् आश्रयेत् धृतिं आत्मरतिरूपां अंबां जननीं श्रयेत्, तेन आहारपर्याप्तिनामकर्मोदयात् यत्र उत्पन्नः सा माता, तद्भोगी पिता इति लौकिकसंबंधः, तान् वक्ति तौ पितरौ मा विसृजतं त्यजतं नाहं वां पुत्रः न युवां मम जनकौः इति अयं हि लोके एव मार्गः। अत्र दृष्टांतः—"जहा एगया भरहे खित्ते मगहजणवए सुवप्पाए नयरीए आरिदमण नय मग्ग (विहिकुसलो) "वयरजंघो" राया, तस्स धारिणी देवी, तस्स उ "सुभाणु" नाम कुमरो अमरुव्व सुंदरो अणुक्कमेण विज्जापुरंदरो जाओ लावण्णजुओ सहजेण जिणधम्मसाहुवंदणपूयणतप्परो जाओ सो क्रमेण कंदप्परमणे जुवणवसमणु

पत्तो ता जणएण रूवलावण्णसीलकलायाओ एकसयं रायकन्नाओ मापत्तीता पणीयाओ सो तेहि सार्द्धं विसयभुंजमाणो तिलोगनाह तिलोयबंधु सेवणरओ चिट्ठइ, तओ एगया अणेगेहिं केवलिहिं अणेगेहिं विउलमइहिं अणेगेहिं उजुमईहिं अणेगेहिं ओहिनाणीहिं अणेगेहिं पुव्वधरेहिं अणेगेहिं आयरियउवज्झाएहिं अणेगेहिं तवोधणेहिं अणेगेहिं नवदिक्खिएहिं अणेगदेवदेवीपरिवुडो सिरिसंभवो अरिहा सवन्नू सवदंसी आगासगएणं छत्तेणं आगासगएणं चक्केणं उद्धूवमाणे हिं सेयचामरेहिं पुरओ धम्मज्झएण विरायमाणं नयरपरिसरे सामि समोसढो, जाओ अ समो सरणो तिवप्पो, परिसा निग्गया, वणपालेण वद्धाविओ कुमारो, जं सदइ दंसणं अभिलससि सो सवजगजीवच्छलो तित्थयरो समागओ, ते पुण्णजोगेणं, तेणं समएणं सो कुमारो इत्थिसएहिं परिवेढीओ आसि, तओ भणइ सुणसु मे तारगो निम्ममो निरहंकारो अकिंचणो सवन्नू सवदंसी जिणो वीयरागो सुद्धधम्मदेसी आगओ, गच्छामि वंदणत्थं इति पुलिअंगो अब्भुट्ठिओ चलिओअ जिणवंदणत्थं, मग्गेवि लोगवूहं भणंतो अहो अममो मे भयवं अकिंचणो मे भयवं अतिण्हो मे भयवं वंदित्तुं भो तुब्भे जइ सुहठिणो आगच्छं तु भो तुम्हाणं सवसंसयच्छेयगो परमेसरो दिट्ठस्सं इअ भणंतो इत्थिआहिं समं वणं पत्तो दिट्ठाइसओ भणइ अत्थि भद्दे! कोवि एयारिसो तिहुअणजणचमक्कारकरो सवसुरिंदेहि वंदिज्जमाणचरलणो? एवं जाव समूहं पासई अरिहंतं फुल्लुप्पलकमलनयणवयणो अहो मे पुन्नंकुरो अज्जफलं पत्तो, अहोमे अज्ज अमियघणो वुट्ठो, जेण वीयरागदंसणं जायं, एवं अभिणंदंतो पंचाभिगमपुवं तित्थयरचरणे वंदिऊण ठिओच्छुणंतो ताव चारित्तमोहस्स खउवसमेण जायविरईमइ भणइ नाह! असरणसरणमहासत्थवाह! भवसमुद्दनिज्जामय! मम सामाईअं उवदिसह जेण कसायवाउ भयई एवं

वुत्ते अरहंतेण सामाईअं दिन्नं, गहिअ वओसमणो जाओ, ताव आउक्खयं जायं, मओ से कुमारसमणो, ता तस्स जणओ राया सपरिजणो आगओ, सुअं मयं पासिऊण विसन्नो जणणी वि विलवंती रुयमाणी सो सुभानु जीवो झत्ति देवत्तं लहिऊण समागओ जिनचरणे, ता अम्मा पियरो विलवंतो पासिऊण भणइ, को एरिसो दुक्खो जं जिनचरणे परमसुहदायगे लहिऊण रुयसिं ? ते भणंति अम्हाणं सुओ परमवल्लाहो वावन्नो, तस्स विओगो जाओ, सो दुरको दुस्सहो, ता सुरो भणइ राय ! भणसु तस्स सरीरं तुह इट्ठं जीवो वा ? जई जीवो इट्ठो ता अहं, कुणसु रागं, जई सरीरो इट्ठो ता कलेवरं रज्जह कहय तुझ पुत्तं तं कत्थ तणुसु जीवे वा ? ऊतयं इच्छतिय कहं रुयसि ? ता जणयो भणई, नो सो रागो उल्लसइ, ता सुरो भणइ मन्नणाचेव एसा जं मे सुओ इमा पिया इमा जणणी इच्चाई वियप्पा अवत्थुतारूवे संबंधे कह मुच्छिया इय वयणेणं पडिबुद्धा सवे पवज्जमागया, इअलोगंमि संबंधो भमरूपो युष्माकमिति हे मातापितरौ ! हे बंधवः ! युष्माकं संबंधः अनादिसंतत्या अनाद्यनियतात्मनां असंयतानां भवतीत्यर्थः वा अनियतात्मनां अनिश्चितस्वरूपाणां मित्रं शत्रुर्भवति, शत्रुः पुनर्मित्रं भवति, अधुना ध्रुवा निश्चिता एकरूपा नानाभावरहिता तान् शीलादिबंधून् शीलसत्यशमदमसंतोषादिबंधून् हितकारकान् नित्यं सदा श्रय साधकशुद्धात्मगुणरूपान् बंधून् भज ॥२॥

**कांता मे समतैवैका, ज्ञातयो मे समक्रियाः । बाह्यवर्गमिति त्यक्त्वा, धर्मसंन्यासवान् भवेत् ॥ ३ ॥**

व्या० कांता मे इति—तत्वज्ञानी आभ्यंतरसंबंधे रतिं करोति तदाह—मे मम स्वरूपसाधनतत्परस्य समता एव एका कांता वल्लभा भोगयोग्या, इत्यनेन तत्वावलंबनीभूतानां शमता वनिता, समक्रियाः साधवः मे ज्ञातयः स्वजना

इति कृत्वा बाह्यवर्गं पुत्रकलत्रादिकं त्यक्त्वा धर्मसंन्यासवान् गृहस्थधर्मत्यागवान् भवेत्, औदयिकसंपदं विहाय क्षयोपशमजां स्वीयां साधनसंपदां भवतति अनादिप्रसंगादिविभावसंपदां गृह्णन् इच्छन् भुंजन् भवाटव्यां परिभ्रमति, स एव सम्यग्ज्ञानदर्शनेन चारित्रसाधनधर्मपरिणतः मोक्षसाधकः भवति ॥ ३ ॥

**धर्मास्त्याज्याः सुसंगोत्थाः, क्षयोपशमिका अपि । प्राप्य चंदनगंधाभं, धर्मसंन्यासमुत्तमम् ॥ ४ ॥**

व्या० धर्मा इति—क्षयोपशमका भेदरत्नत्रयीरूपाः धर्माः सुसंगोत्थाः सत्संगदेवगुरुप्रसंगसंभवाः अपि धर्माः त्याज्याः क्षमादिवचनरूपा धर्मादिनिमित्ताश्रिताः यद्यपि अर्वाक्काले साधनरूपाः अपि त्याज्याः धर्मसंन्यासं उत्तमं क्षायिकाभेदरत्नत्रयीरूपं स्वधर्मपरिणामं सहजपरिणमनरूपं प्राप्य लब्ध्वा कथंभूतं धर्मसंन्यासं ? चंदनगंधाभं चंदनगंधतुल्यं, तिलादौ हि सुगंधता संगसंभवा पुरुषादिनिमित्तसंभवा, चंदने सुगंधता सहजरूपा तादात्म्यत्वेन सहजेन उत्थाः उत्पन्नाः सहजोत्थाः अनेन सहज एव आत्मनि धर्मपरिणामः स्वरूपत्वात् सहजः सच अशुद्धतया आवृतत्वेन गुरुनिमित्तात् प्रागभावं लभते, तत्र प्रथमं सविकल्पयुतजिज्ञासादिनिमित्तसापेक्षं सम्यग्दर्शनादिकं प्रकटयति, तेनैव वर्द्धमानेन विकल्पं अभेदरत्नत्रयीरूपं निमित्ताद्यपेक्षां विना गुणपरिणामरूपं सहजधर्मपरिणामं परिणयति तदा सविकल्पा साधना त्याज्या एव भवति । उक्तंच योगदृष्टिसमुच्चये—" द्वितीयाऽपूर्वकरणे प्रथमतात्त्विको भवेत् इति " तत्र सम्यग्लाभकाले प्रथमापूर्वकरणः क्षपकश्रेणिनिवृत्तिवादरगुणस्थाने, द्वितीयः अपूर्वकरणः तत्र द्वितीये अपूर्वकरणे प्रथमः धर्मः अतात्त्विकः स तात्त्विको भवति । भावना च यद्यपि क्षयोपशमिकाः सम्यग्दर्शनादिगुणाः अरिहंतप्रवचनादिस्वजातिअबाधक

विजातिपरद्रव्यमवलंब्य प्रवर्त्तते परावलंबनेन अतात्विकाः तत्वस्वरूपं न तन्मया इति किंतु अरिहंतादिगुणावलंविनः इति एषा परानुयायिता अस्त्येव, इत्यनेन अतात्विकाः यस्य सम्यग् दर्शनादिगुणक्षयोपशमः स्वरूपनिर्धारभासनरमणात्मकः अन्यनिमित्ताद्यवलंबनकृते स तात्विकः इति, अत्र रत्नत्रयीस्वरूपे वीतरागसर्वज्ञोक्तयथार्थतत्वार्थश्रद्धानं सम्यग्दर्शनं यथार्थतत्त्वाववोधो ज्ञानं तत्वरमणं चारित्रं इति गुणत्रयी क्षयोपशमअर्हद्वाक्याद्यवलंबनेन साधकत्वस्वगुणोऽपि क्रमकारणं करणात् अतत्वं विकल्पपूर्वकं अंतर्मुहूर्त्तं यच्चोपादयत्वेन स्वतत्वनिर्द्धारभासनरूपं हेयबुद्ध्या परभावत्याग-निर्द्धारभासनरमणयुक्तं रत्नत्रयीपरिणमनं भवति तद्भेदरत्नत्रयीरूपं, यच्च सकलविभावहेयतयाप्यवलोकनादिरहितं विचारणस्मृतिध्यानादिमुक्तं एकसमयेनैव संपूर्ण–आत्मधर्मनिर्धारभासनरमणरूपं निर्विकल्पसमाधिमय–अभेदरत्नत्रयी-स्वरूपं । उक्तं च ध्यानप्रकाशे—

जोयवियप्पो चिरकालीओ सपरो भयावलंवणे होइ । जिट्ठिव्व पुररसचलणे, निमित्तगाही भवे तेई ॥ १ ॥

एग समएणत्तिद्यवबुधम्मंमि जंगुणतिगरमपरदव्वाणु–वडगीतिमत्तवाई अभेईसो ॥ २ ॥ (?)

ईदृग् अभेदरत्नत्रयीपरिणतेन भेदरत्नत्रयी परिणामसप्रयासः सशंकः त्यज्यत एव ॥ ४ ॥

**गुरुत्वं स्वस्य नोदेति, शिक्षासात्म्येन यावता । आत्मतत्वप्रकाशेन, तावत्सेव्यो गुरूत्तमः ॥ ५ ॥**

व्या० गुरुत्वमिति—यावता अस्यसाधकस्य गुरुत्वं स्वस्य आत्मन एव न उदेति न जायते, केन ? शिक्षासात्म्येन स्वयमेव स्वस्य शिक्षादायकः न भवति, पुनः केन ? आत्मतत्वप्रकाशेन आत्मधर्मप्राग्भावेन संशयविपर्ययरहितशुद्धात्मत-

त्वप्रकाशकः यावन्न भवति तावत् अयं उत्तमस्वपरोपकारी रत्नत्रयीपरिणतः द्रव्यभावगुरुगुणोपेतः गुरुः तत्वकथकः सेव्यः, हे-गुरो ! अतीतानंतकालाप्राप्तं स्वात्मधर्मनिर्द्धारभासनरमणं तत्त्वोपदेशांजनेन प्राप्तं आत्मानुभवसुखं भुक्तं अहो गुरूणां कृपा ! ! यया परमामृतास्वादनं भवति, अतः यावत् पूर्णानंदः तावत् तव चरणौ शरणं । उक्तं चः—"

नाणस्स होइ भागी थिरयरो दंसणे चरित्ते अ । धन्ना आवकहाए गुरुकुलवासं न मुंचंति ॥ १ ॥

अतएव परित्यज्य चक्रवर्त्तित्वं इभ्य-श्रेष्ठित्वं, गृह्णंति श्रमणत्वं, सेवंते गुरुचरणारविंदान् तत्वजिज्ञासापटवः, ॥ ५ ॥

**ज्ञानाचारादयोऽपीष्टाः, शुद्धस्वस्वपदावधि । निर्विकल्पे पुनस्त्यागे, न विकल्पो न च क्रियाः ॥ ६ ॥**

व्या० ज्ञानाचारा० इति—ज्ञानाचारादयः कालविनयादिनिःशंकादिसमितिगुप्त्यादयः आचाराः, आचर्यन्ते गुणवृद्धये ते आचाराः शुद्धस्वस्वपदावधि, शुद्धः स्वइतिस्वकः तस्य पदस्य अवधिः मर्यादा तावत् इष्टाः, शुभोपयोगदशायां सविकल्पतां यावत् आचाराः इष्टाः वल्लभाः,यदानिर्विकल्पे चिंतनारहिते त्यागे विकल्पः न इदं त्याज्यं इदं ग्राह्यं इति विकल्परहिते त्यागे निःप्रयासस्वरूपैकत्वरूपे विकल्पचिंतना न क्रिया बलवीर्यादिरूपापि तत्तत्र स्वरूपावलंबिगुणवर्त्तने वीर्यस्य स्वक्षेत्रावगाढत्वेन न चलनता परभावग्रहणे तु परग्राहकत्वेनोन्मुखवीर्यप्रवृत्तौ कार्याभ्यासतः विषमीकृतवीर्यत्वेन चलनारूपा क्रिया अस्ति, अतः स्वरूपमग्ना स्वस्वप्रदेशव्याप्तगुणानां तज्जदेशगतवीर्यसहकारवृत्त्या प्रदेशांतरागमनरूपा वीर्यचलनाक्रिया न द्विधा, बाधका साधका चैव, तत्र मिथ्यात्वासंयमकषायप्रेरितचेतनापरिणामाः पराभिलाषकत्वेन परिग्रहणाय प्रेरयंति वीर्यं, सा आभ्यंतरा कुदेवसेवनादिरूपा बाह्यक्रिया बंधहेतुत्वेन बाधका भण्यते, यातु शुद्धदेवगुरुसेवनाश्रवनिरोधसंवरपरिणमनरूपा कर्मबंध-

रोधरूपा साधका उक्ता। निर्विकल्पे ध्यानसमाधौ बाधकक्रिया भावसाधकबाह्यक्रिया—अभावः गुणानुयायिवीर्यपरिणमन-रूपा अभ्यंतरा क्रिया अस्ति, तथापि ग्रहणत्यागरूपक्रियाअभावे न क्रिया इति उक्तं ॥ ६ ॥

**योगसंन्यासतस्त्यागी, योगानप्यखिलांस्त्यजेत्। इत्येवं निर्गुणं ब्रह्म, परोक्तमुपपद्यते ॥ ७ ॥**

व्या० योगसंन्यासत इति—त्यागी बाह्याभ्यंतरसमस्तपरभावत्यागी योगसंन्यासतः योगरोधनतः आवर्जीकरणात् ऊर्ध्वं अखिलान् समस्तान् योगान् वीर्यपरिस्पंदरूपान् त्यजेत् अयोगी भवति, इति समस्तयोगरोधेन परोक्तं परैः उत्कृष्टैः सर्वज्ञैः उक्तं निवेदितं निर्गुणं योगादिरहितं सत्वरजस्तमोरूपगुणरहितं ब्रह्म आत्मस्वरूपं उपपद्यते शुद्धचिन्मयं निष्पद्यते, योगरोधस्वरूपं च वस्तुत इति संसर्गिकगुणरहितः इति कथनेन आत्मा सदैव निर्गुणः इति निवारयन्नाह ॥ ७ ॥

**वस्तुतस्तु गुणैः पूर्णमनंतैर्भासते स्वतः। रूपं त्यक्तात्मनः साधोर्निरभ्रस्य विधोरिव ॥ ८ ॥**

व्या०—वस्तुत इति—वस्तुतः पदार्थमूलस्वरूपेण, शुद्धः आत्मा स्वतः स्वस्वभावेन अनंतैः गुणैः पूर्णं भासते सम्यग्ज्ञानदर्शनचारित्रतपोरूपेण साधनपरिणमनन अनादिसंगीभावपरित्यागेन स्वरूपभासनरमणानुभवनेन अभिनवकर्मग्रहण स्वरूपैकत्वतन्मयध्यानतः पूर्वकर्मक्षरणेन अयं आत्मा शुद्धः सकलपुद्गलोपाधिरहितो यदा भवति तदा ज्ञानदर्शनचारित्र-वीर्यागुरुलघु—अव्याबाधासंगामूर्त्तपरमदानलाभभोगोपभोगाक्रियसिद्धत्वादि—अनंतैस्त्वसंख्येयप्रदेशव्यापकैः गुणैः पूर्णं भासते राजते इत्यर्थः, किमिव त्यक्तात्मनः त्यक्तं परभावे आत्मत्वं येन सः तस्य त्यक्तात्मनः साधोः मोक्षपदसाधकस्य

रूपं निरभ्रस्य मेघपटलरहितस्य विधोः चंद्रस्य इव रूपं भासते, यथा अभ्रहीनं चंद्रस्य रूपं भासते यथा अभ्रहीनं चंद्रस्वरूपं निर्मलं भवति तथा ज्ञानावरणाद्यभ्ररहितस्य शुद्धात्मनः स्वरूपं निर्मलं भवति, अतएव बाधकपरिणतिहेतुतां संत्यज्य साधकत्वमवलंब्य साधकत्वेऽपि विकल्परूपार्वाचीनापवादसाधनां त्यजन् उत्सर्गसाधनां गृह्णन् पुनः त्यजन् पूर्णगुणावस्थां श्रयन् एवं अनुक्रमेण आत्मा सकलसंसर्गभावनिरावरणेन निर्मलनिःकलंकासंगसर्वावरणरहितः सच्चिदानंदरूपः आत्मा अत्यंतैकांतिकनिर्वंध(द्वद्वं)निःप्रयासनिरुपमचरितसुखपूर्णो भवति, अतः सम्यग् ज्ञानबलेन हेयोपादेयविवेचनं कृत्वा समस्तहेयभावत्यागवत्तया भवितव्यं, त्यागो हि निर्जरामूलं, परभावग्रहणमेवात्माहितं अतः त्यागः करणीय एव आत्मस्वरूपाभिलाषुकैः ॥ ८ ॥

इति व्याख्यातं त्यागाष्टकम् ॥ ८ ॥

## ॥ अथ क्रियाष्टकम् ॥ ९ ॥

परभावत्यागकरणं एव साधका क्रिया, अतः क्रियाष्टकं निरूप्यते, क्रियते आत्मकर्तृत्वेन सा क्रिया, कर्तुः द्रव्यस्य प्रवृत्तिः, स्वरूपाभिमुखदर्शनज्ञानोपयोगता ज्ञानं, स्वरूपाभिमुखवीर्यप्रवृत्तिः क्रिया, "ज्ञानक्रियाभ्यां मोक्षः" तत्र ज्ञानं स्वपरावभासनरूपं, क्रिया स्वरूपरमणरूपा, तत्र चारित्रवीर्यगुणैकत्वपरिणतिः क्रिया, सा साधका, अत्र अनादिसंसारे अशुद्धकायिक्यादिक्रियाव्यापारनिष्पन्नः संसारः स एव विशुद्धसमितिगुप्त्यादिविनयवैयावृत्यादिसत्क्रियाकरणेन निवर्तते, अतः संसारक्षपणाय क्रिया संवरनिर्जरात्मिका करणीया, नामस्थापनासुगमा द्रव्यक्रिया शुद्धा अशुद्धा च, तत्र शुद्धा स्वरूपा-

नुयायियोगप्रवृत्तिरूपा, अशुद्धा कायिक्यादिव्यापाररूपा भावक्रिया वीर्यप्रवृत्तिरूपा, पुद्गलानुयायि—औदारिकादिकायव्यापारसन्मुखा अशुद्धा, शुद्धा पुनः स्वगुणस्वपरिणमनत्वनिमित्तवीर्यव्यापाररूपा क्रिया भावक्रिया तत्र क्रिया संकल्पः नैगमेन ससंग्रहेण सर्वे संसारजीवाः सक्रिया उक्ताः, व्यवहारेण शरीरपर्याप्त्यनंतरं क्रिया ऋजुसूत्रनयेन कार्यसाधनार्थं योगप्रवृत्तिमुख्यवीर्यपरिणामरूपादिक्रिया, शब्दनयेन वीर्यपरिस्पंदात्मिका, समभिरूढनयेन गुणसाधनारूपसकलकर्त्तव्यव्यापाररूपा, एवंभूतनयेन तत्वैकत्ववीर्यतीक्ष्णतासाहाय्यगुणपरिणमनरूपा । अत्र साधकस्य साधनक्रियाया अवसरः 'नाणचरणेण मुक्खो' तेन चरणगुणप्रवृत्तिस्वरूपग्रहणपरभावत्यागरूपा क्रिया मोक्षसाधका, अतः ज्ञाततत्वेन तत्वसाधनार्थं सम्यक्क्रिया करणीया, तदुपदेशः क्षायिकसम्यक्त्वं यावत् निरंतरं निःशंकाद्यष्टदर्शनाचारसेवना केवलज्ञानं यावत् कालविनयादिज्ञानाचारता निरंतरं यथाख्यातचारित्रादर्वाक् चारित्राचारसेवना परमशुक्लध्यानं यावत् तपआचारसेवना सर्वसंवरं यावत् वीर्याचारस्य साधनाऽवश्यंभाविनी, नहि पंचाचारमंतरेण मोक्षनिष्पत्तिः, दर्शनाद्धि स्वगुणानां प्रवृत्तिः क्रियादर्शनादिगुणविशुद्ध्यर्थं "तन्निमित्तमवलंब्य प्रवर्त्तनं आचारः" इति अतः गुणपूर्णतानिष्पत्तेः अर्वाक् आचरणा करणीया, आचरणातः गुणनिष्पत्तिः भवत्येव, पूर्णगुणानां तु आचरणा परोपकाराय इति सिद्ध, अतएव उच्यते:—

**ज्ञानी क्रियापरः शांतो, भावितात्मा जितेंद्रियः । स्वयं तीर्णो भवांभोधेः; परांस्तारयितुं क्षमः ॥ १ ॥**

व्या० ज्ञानीति—ज्ञानी यथार्थतत्वस्वरूपावबोधी यदा क्रियासाधनकारणानुयायियोगप्रवृत्तिरूपा स्वगुणानुयायिवीर्यप्रवृत्तिरूपा तस्यां तत्परः उद्यतः, पुनः शांतः कषायतापरहितः, भावितात्मा भावितः शुद्धस्वरूपरमणमयः आत्मा यस्य

सः भावितात्मा, जितेंद्रियः पराजितेंद्रियव्यापारः भवसमुद्रात् स्वयं तीर्णः पारंगतः, परान् आश्रितान् उपदेशदानादिना तारयितुं क्षमः समर्थः भवति, यो हि सम्यग्दर्शनज्ञानचारित्रपरिणतः आत्मारामी आत्मविश्रामी आत्मानुभवमग्नः स स्वयं संसारात् निवृत्तः तत्सेवनपरान् निस्तारयति, अत्र द्रव्यज्ञानं भावनारहितं वचनव्यापारमनोविकल्परूपं संवेदन-ज्ञानं यावत् , तच्च भावज्ञानं तत्वानुभवरूपोपयोगस्य कारणं, द्रव्यक्रिया योगव्यापारात्मिका सापि भावक्रियायाः स्वगु-णानुयायिस्वरूपप्रवृत्तिरूपायाः कारणं, अत्र 'ज्ञानस्य फलं विरतिः' तेन ज्ञानं विरतिकारणं । 'उक्तं च—तत्वार्थटीकायां "दर्शनज्ञाने चारित्रस्य कारणं चारित्रं मोक्षकारणं" । उत्तराध्ययनेऽपिः—

ता दंसणिस्स नाणं नाणेण विना न हुंति चरणगुणा । अगुणिस्स नत्थि मुक्खो नत्थि अमुक्खस्स निव्वाणं इति ॥ १ ॥

अतः ज्ञानं क्रियायुक्तं हिताय नैकमेवेत्याह ।

**क्रियाविरहितं हंत ! ! ज्ञानमात्रमनर्थकम् । गतिं विना पथज्ञोऽपि, नाप्नोति पुरमीप्सितम् ॥ २ ॥**

व्या०—क्रिया इति । क्रियाविरहितं क्रिया साधनप्रवृत्तिरूपा तया विरहितं ज्ञानमात्रं संवेदनज्ञानं अनर्थकं न मोक्ष-रूपकार्यसाधकं । तत्र दृष्टांतः पथज्ञोऽपि मार्गज्ञाता अपि गतिं विना चरणविहारक्रियां विना ईप्सितं इच्छितं नगरं न आप्नोति चरणचंक्रमणेनैव ईप्सितनगरप्राप्तिः इति 'नाणचरणेण मुक्खो' इति वचनात् ।

सन्नाणनाणोवगए महेसी, अणुत्तरं चरिउं धम्मसंचयं । अणुत्तरे नाणधरे जसंसी, उभासई सूरिएवंतलिक्खे ॥ १ ॥

॥ इति उत्तराध्ययने ॥ २ ॥

पुनस्तदेव दृढयन्नाह—

**स्वानुकूलां क्रियां काले, ज्ञानपूर्णोऽप्यपेक्षते । प्रदीपः स्वप्रकाशोऽपि, तैलपूर्त्यादिकं यथा ॥ ३ ॥**

व्या० स्वानुकूलामिति—ज्ञानपूर्णोऽपि स्वपरविवेचनविशिष्टोऽपि काले अवसरे कार्यकरणक्षणे स्वानुकूलां तत्कार्यकरणरूपां क्रियां अपेक्षते,तत्वज्ञानी सम्यग्ज्ञानी सम्यग् ज्ञानी प्रथमं संवरकार्यरुचिः देशविरतिसर्वविरतिग्रहणरूपां क्रियां आश्रयति, पुनः चारित्रयुक्तोऽपि तत्वज्ञानी केवलज्ञानकार्यनिष्पादनरसिकः शुक्लध्यानारोहरूपां क्रियां आश्रयति, केवलज्ञानी सर्वसंवरपूर्णानंदकार्यावसरे योगरोधरूपां क्रियां करोति, अतएव उच्यते ज्ञानी क्रियां अपेक्षते, एवं तदर्थमेव आवश्यककरणं मुनीनां, तत्र दृष्टांतः यथा प्रदीपः स्वप्रकाशोऽपि तैलपूर्त्यादिकां क्रियां अपेक्षते एवं सम्यग्ज्ञानी अपि क्रियारंगी भवति, क्रिया हि वीर्यशुद्धिहेतुः अशुद्धवीर्यविहिताश्रवः संसरति संसारे, स एव गुणी सेवनगुणप्राग्भावोद्यतः संवरी-भवति, कर्मप्रदेशग्रहणं योगैः, योगाः वीर्यप्रभवाः, तेन योगाः परमात्मवंदनस्वाध्यायाध्ययनादियोजिताः न कर्मग्रहणाय भवंति योगानां सत्प्रवृत्तिः क्रिया इति ॥ ३ ॥

**बाह्यभावं पुरस्कृत्य, ये क्रियाव्यवहारतः । वदने कवलक्षेपं, विना ते तृप्तिकांक्षिणः ॥ ४ ॥**

व्या० बाह्यभावमिति—बाह्यभावं बाह्यत्वं पुरस्कृत्य अंगीकृत्य ये नराः असेवितगुरुचरणाः व्यवहारतः क्रियां निषेधयंति "किं बाह्यक्रियाकरणेन" ? इति उक्त्वा क्रियोद्यमं मंदयंति ते नरा वदने मुखे कवलक्षेपं विना तृप्तिकांक्षिणः तृप्तिवांछका इति ॥ ४ ॥

**गुणवद्बहुमानादेर्नित्यस्मृत्या च सत्क्रिया । जातं न पातयेद् भावमजातं जनयेदपि ॥ ५ ॥**

व्या० गुणवदिति—सम्यग्दर्शनज्ञानचारित्रक्षमामार्दवार्जवादिगुणवंतः तेषां बहुमानं स्वतोऽधिकगुणवतां बहुमानं आदिशब्दात् दोषः पश्चात्तापः पापदुगंछातिचारालोचनं देवगुरुसाधर्मिकभक्तिः उत्तरगुणारोहणादिकं सर्वं ग्राह्यं, च पुनः नित्यस्मृतिः पूर्वगृहीतव्रतस्मरणं, अभिनवप्रत्याख्यानसामायिकचतुर्विंशतिस्तवगुरुवंदनप्रतिक्रमणकायोत्सर्गप्रत्याख्यानादीनां नित्यस्मृत्या सत्क्रिया भवति । अत्र गाथा श्रीहरिभद्रपूज्यैर्विंशतिकायांः—

तम्हाणिच्चसए बहुमाणेणं च अहिगयगुणिंमि । पडिवक्ख दुगंछाए, परवाडिआलोयणत्थं च ॥ १ ॥
तित्थंकरभत्तीए सुसाहुजणपज्जुवासणाए य । उत्तरगुणसद्धाए एत्थ सया होई जइयवं ॥ २ ॥
एवमसंतो विरइ सो जाईजीओनपाडइकयावि । ता एत्थं बुद्धिमया अपमाओ होई कायव्वो ॥ ३ ॥
सुहपरिणामो निच्चं चउसरणगमाई आयरं जीवो । कुसलपयडीओ बंधई, बद्धाओ सुहाणुबंधाओ ॥ ४ ॥

इत्यादिक्रियाजातं उत्पन्नं भावं सम्यग् ज्ञानादिसंवेगनिर्वेदलक्षणं न पातयेत् , अपिच न जातं धर्मध्यानशुक्लध्यानादिकं भावं अजातं अपि अनुत्पन्नं अपि जनयेत् निष्पादयेत् श्रेणिककृष्णादीनां गुणिबहुमानेन, मृगावत्याः पश्चात्तापेन, आलोचनेन अतिमुक्तनिर्ग्रंथस्य, गुरुभक्त्या चंडरुद्रशिष्यस्य, इत्याद्यनेकवाचंयमानां परमानंदनिष्पत्तिः श्रूयते आगमे ॥५॥

**क्षायोपशमिके भावे, या क्रिया क्रियते तया । पतितस्यापि तद्भावप्रवृद्धिर्जायते पुनः ॥ ६ ॥**

व्या० क्षायोपशमिके इति—चारित्रानुगवीर्यक्षयोपशमे जाते या क्रिया वंदननमनादिका क्रियते तया क्रियया पतितस्य अपि गुणपराङ्मुखस्यापि जीवस्य पुनः तद्भावप्रवृद्धिः जायते । उक्तं च—

खउवसमिगभावे, दढजत्तकयं सुहं अणुट्ठाणं । पाडिवसियंपिअहुज्जा, पुणोवि तब्भाववुड्ढिकरं ॥ १ ॥

औदयिकभावेऽपि क्रिया भवति, सा न तादृग्गुणवृद्धिकरी औदयिकी क्रिया च उच्चैर्गोत्रसुभगादेययशः नामकर्मोदयेन अंतरायोदयेन उच्चैर्गोत्रोदयेन च तपःश्रुतादिलाभः प्रज्ञापनासूत्रतः ज्ञेय इति, ज्ञानावरणदर्शनावरणदर्शनमोह-चारित्रमोह–अंतरायक्षयोपशमतः शुद्धधर्मप्राग्भावार्थं या क्रिया क्रियते सा आत्मगुणप्रकाशकरी भवति ॥ ६ ॥

पुनस्तदेव दर्शयति ।

**गुणवृद्ध्यै ततः कुर्यात्, क्रियामस्खलनाय वा । एकं तु संयमस्थानं, जिनानामवतिष्ठते ॥ ७ ॥**

व्या० गुणवृद्ध्यै इति—ततः स्वधर्मप्राग्भावहेतुत्वात् क्रियां सत्यवृत्तिं कुर्यात्, किमर्थं? गुणवृद्ध्यै, गुणाः ज्ञानादयः तेषां वृद्धिः तस्यै, गुणप्रोल्लासार्थमिति नत्वाहारादिपंचदशसंज्ञानिमित्तं पुनः अस्खलनाय अप्रतिपाताय क्रियारहितः साधकत्वे अवस्थातुमशक्तः यतः वीर्यस्य चापल्यं तच्च क्रियावतः सत्क्रियानियुक्तं प्रतिपाताय न भवति, अन्यथा च अनादिप्रवृत्तिप्रवृत्तः स्खलनाय भवति, क्रियया उत्तरोत्तरस्थानारोहणं च श्रुयते आगमे, तथा च एकं अप्रतिपातिसंयमस्थानं जिनानां क्षायिकज्ञानं चारित्रवतां एकं पूर्णस्वरूपैकत्वरूपं स्थानं अवतिष्ठते नान्यस्य अतः साधकेनाभिनवगुणवृद्ध्यर्थं

क्रिया करणीया, अतएव वनं निवसंति निर्ग्रंथाः चैत्ययात्राद्यर्थं गच्छंति नंदीश्वरादिषु कायोत्सर्गयंति शरीरं आकुंचंति विग्रहं वीरासनेन संलेखयंत्यनशनोत्सुकाः गृह्णंति परिहारविशुद्धिजिनकल्पाद्यभिग्रहव्यूहं ॥ ७ ॥

**वचोऽनुष्ठानतोऽसंगा, क्रिया संगतिमंगति। सेयं ज्ञानक्रियाभेदभूमिरानंदपिच्छला ॥ ८ ॥**

**इति क्रियाष्टकम् ॥ ९ ॥**

व्या० वचोनुष्ठानत इति—वचनं अर्हदाज्ञा, तदनुयायिनी क्रिया धर्महेतुः यतः।

प्रशांतचित्तेन गभीरभावे नैवाहृता सा सफला क्रिया च। अंगारवृष्टेः सहसा न चेष्टा नासंगदोषैकगुणप्रकर्षा ॥ १ ॥

विषांगारान्योन्यानुष्ठानत्यागेन श्रीमद्वीतरागवाक्यानुसारतः उत्सर्गापवादसापेक्ष्यरूपा क्रिया वचनानुष्ठानक्रिया करणतः असंगक्रिया संगतिं संयोगितां अंगति प्राप्नोति, वचनक्रियावान् अनुक्रमेण असंगक्रियां एव निर्विकल्पनिःप्रयासरूपां क्रियां प्राप्नोति, सा एव असंगक्रिया एव ज्ञानक्रिया, एवं अभेदभूमिः ज्ञेया असंगक्रिया भावक्रिया शुद्धोपयोग-शुद्धवीर्योल्लासतादात्म्यतां दधाति, ज्ञानवीर्यैकत्वं ज्ञानक्रिया–अभेदः इत्यनेन यावद् गुणपूर्णता न तावत् निरनुष्ठाना क्रियाकरणीया, नहि तत्वज्ञाने क्रिया निषेधका, किंतु क्रियादिशुद्धरत्नत्रयीरूपवस्तुधर्मसाधनकारणेन धर्मः धर्मत्वं आत्मस्थमेव। उक्तं च श्रीहरिभद्रपूज्यैः दशवैकालिकवृत्तौ "धर्मसाधनत्वाद् धर्म इति" अतः द्रव्यं क्रियां धर्मत्वेन गृह्णंति तत्कारणे कार्योपचार एव न्याय्यः एतत् श्रद्धानविकलानां क्रिया न धर्महेतुः।

वहुगुणविज्जानिलओ, उस्सुत्तभासी तहावि मुत्तव्वो। जह पवरमणीजुत्तो, विग्घकरो विसहरो लोए ॥ १ ॥

इति षष्टिशतप्रकरणे। तथा च आचारांगे "भयविचिकित्सायां न संयम, इति अतः निमित्तहेतुत्वेन क्रिया निरनुष्ठाना करणीया इयं असंगक्रिया, सा अनाहतपिच्छिला स्वाभाविकानंदामृतरसार्द्रा, अतः आत्मतत्वाववोधानंदोत्सुकैर्निरनुष्ठाना सत्प्रवृत्त्यसत्प्रवृत्तिपरित्यागरूपा क्रिया द्रव्यतो भावतः स्याद्वादस्वगुणानुयायिवीर्यप्रवृद्धि–अभिनवगुणवृद्धिरूपा संयमस्थानारोहणतत्वैकरूपा क्रिया प्रतिसमयं करणीया, साध्यसापेक्षत्वेन, अतएव "ज्ञानक्रियाभ्यां मोक्षः" इति निर्द्धारणीयं द्रव्यक्रियोद्यतो भावक्रियावान् भवति ततश्च स्वरूपास्पदीभवति इति श्रेयः ॥ ८ ॥

इति क्रियाष्टकम् ॥ ९ ॥

## ॥ अथ तृप्त्यष्टकम् ॥

क्रियावंतो हि कदाचिन्मदलोभान्निष्टाः सदभ्यासं निष्फली कुर्वंति, तेन कषायत्यागरूपपूर्वकं स्वरूपभोगोत्पन्नतृप्तिरूपं अष्टकं निरूप्यते। तत्र तृप्तिर्नामादिभेदाच्चतुर्धा—तत्र नामतृप्तिः जीवस्य अजीवस्य तृप्तिरिति नाम क्रियते, शब्दोच्चारणरूपा च, स्थापनातृप्तिः अक्षरन्यासरूपा, द्रव्यतृप्तिः आगमतः तत्पदार्थज्ञोऽनुपयुक्तश्च नो आगमतो ज्ञशरीरभव्यशरीरतद्व्यतिरिक्तभेदात् तत्र तद्व्यतिरिक्ता द्रव्येण आहारधनोपकरणा तृप्तिः भावतृप्तिः आगमतः तत्पदार्थज्ञोपयुक्तस्य नोआगमतः स्वरूपज्ञानानंदपूर्णस्य सहजात्मानुभवाविच्छिन्नस्य भवति, नैगमे जीवाजीवात् तृप्तिः, संग्रहव्यवहा-

राभ्यां ग्रहणयोग्यद्रव्यप्राप्तौ, ऋजुसूत्रेण ईप्सितसंपत्तौ, शब्दादिनयैस्तु स्वस्वरूपनिरावरणपूर्णाविघ्नमोक्तृत्वेन तृप्तिः। इयं च पद्धतिः ओघनिर्युक्तिवृत्तिगताहिंसानयवज्ज्ञायनीया, अत्र कारणतो नामादिनिक्षेप (त्रिक) नैगमादिनयसक्ता वस्तुतः भावनिक्षेपशब्दादिनयरूपा एव ग्राह्या सा च साधनकालेऽपवादोद्भवासिद्धत्वे उत्सर्गोद्भवा ग्राह्या तामेवाह।

**पीत्वा ज्ञानामृतं भुक्त्वा, क्रियासुरलताफलम्। साम्यतांबूलमास्वाद्य, तृप्तिं याति परां मुनिः॥ १॥**

व्या० पीत्वा इति—मुनिः सावद्याभापी स्वात्मावलोकनलीनः परां उत्कृष्टां लौकिककुप्रावचनिकेतरां तृप्तिं संतोपावस्थां याति प्राप्नोति लभते इत्यर्थः, किं कृत्वा? ज्ञानामृतं ज्ञानं यथार्थस्वपरपदार्थस्वरूपावभासनरूपं तदेवामृतं पीत्वा शुद्धात्यंतावच्छिन्नचिद्धारापरीक्षितहेयोपादेयवस्त्ववलोकनोपयोगं पीत्वा क्रिया सद्योगप्रवृत्तिः तत्वप्राग्भावविभावाभावभावितचेतना श्रद्धा तत् पूर्वका या वीर्यप्रवृत्तिः सा एव सुरलता कल्पवल्ली तस्याः फलं स्थिरत्वेन स्वानुभवलक्षणं भुक्त्वा साम्यं शमता शुभाशुभेपु पुद्गलादिपु तुल्यत्वं तदेव तांबूलं स्वादिमोपमानमास्वाद्य मुनिः परां उत्कृष्टां तृप्तिं याति इत्यन्वयः। सांसारिकोपाधिपुद्गलोद्भवविभावभावितात्मनोऽनादिमिथ्यात्वाज्ञानासत्क्रिया रक्तद्विष्टतासक्तस्य जगदुच्छिष्टाभोग्यवर्णाद्यनुभवमग्नत्वेन या आरोपजा तृप्तिः न सा तृप्तिः, यतः तत्प्राप्तावपि तृष्णा प्रगुणीभवति तेन न तृप्तिः सततानंदभोगेनैव तृप्तिः, अतएव सत्पुरुपाः त्यजंति दामिनीचलान् कामिनीविलासान्, हीलयंति उदयागतान् सद्विपाकान्, निःसंगयंति रंगाभिष्वंगिसंगसंगान्, विरंगयंति अंगरागान्, विशंति स्वाध्यायाध्ययनेन तत्वश्रवणमनननिदध्यासनपरिशीलनेपु, धन्यं मन्यंते परमावस्थां इति॥ १॥

पुनरपि नित्यां तृप्तिं व्याख्यातुमाह—

**स्वगुणैरेव तृप्तिश्चेदाकालमविनश्वरी। ज्ञानिनो विषयैः किं तैर्यैर्भवेत्तृप्तिरित्वरी ॥ २ ॥**

व्या० स्वगुणैरिति चेत् यदि स्वगुणैः चैतन्यस्य स्वद्रव्यस्वक्षेत्रस्वकालस्वभावभूतैः अमूर्त्तासंगानाकुलचिदानंदरूपैः एव अन्ययोगव्यवच्छेदार्थः, तृप्तिः ज्ञानिनः सम्यगवबुद्धतत्वस्य तैः स्पर्शरसवर्णगंधशब्दैः विषयैः किं ? न किमपि, यः स्वरूपानुभवी सविभावहेतुभूतान् इंद्रियविषयान् नावगच्छति, कथंभूता स्वगुणैः तृप्तिः ? आकालं सर्वमप्यनागतं कालं अविनश्वरी विनाशरहिता सहजत्वेन नित्या इत्यर्थः, स्पर्शज्ञानवतः यैः शब्दादिभिः इत्वरी अल्पकालीया औपचारिकी तृप्तिर्भवेत् तैः विषयैः परविलासैः किं ? न किमपि परविलासाः बंधहेतवः एव। अत्र भावना—अनेकशः भुक्ता एते तथापि नाप्तं आत्मस्वरूपं, न च ते सुखहेतवः किंतु सुखत्वबुद्धिरेव कृतका, तेन तद्विषयाभिमुखतैव न स्वरूपरसिकानां अतः आत्मगुणैस्तृप्तिर्विधेया ॥ २ ॥

तामेव भावयति।

**या शांतैकरसास्वादाद्भवेत्तृप्तिरतींद्रिया। सा न जिह्वेंद्रियद्वारा, षड्रसास्वादनादपि ॥ ३ ॥**

व्या० शांतैकेति, या तृप्तिः अतींद्रिया इंद्रियविषयग्रहणरहिता शाम्यरसास्वादनात् भवेत् लभेत सा तृप्तिः षड्रसास्वादनात् तिक्ताम्लमधुरकषायकटुक्षाररसभोजनात् जिह्वेंद्रियद्वारा रसनेंद्रियद्वारा न भवति, रसनेंद्रियेण पौद्गलिकरसानुभवः, आत्मा च स्वरूपानुभवी पुद्गलगुणानां ज्ञाता, न भोक्ता, पुद्गलगुणा अभोज्या एव मोहोदयात् आहार-

संज्ञातः रसास्वादनं न स्वरूपतः, स्वरूपं च ज्ञानानुभवलक्षणं अतः आत्मानुभवा तृप्तिः न पौद्गलिका इति ॥ ३ ॥

**संसारे स्वप्नवन्मिथ्या, तृप्तिः स्यादाभिमानिकी । तथ्या तु भ्रांतिशून्यस्य, सात्मवीर्यविपाककृत् ॥ ४ ॥**

व्या० संसारे इति, संसारे द्रव्यतः चतुर्गतिरूपे भावतः मिथ्यात्वादिविभावलक्षणे संसरणे, आभिमानिकी मिथ्याभिमानोत्पन्ना पुद्गलादिप्राप्तिमान्यतारूपा तृप्तिः, सा स्वप्नवत् मिथ्या वितथा कल्पनारूपा एव, यतः अज्ञः तृष्णाग्रसितः स्वीयकल्पनाकल्पितेष्टतेष्टीकृतपुद्गलस्कंधसंपत्तौ 'अहो मया प्राप्तं मणिरत्नादिव्यूहं' पापोदयमाधुरीवचनचातुरीचतुरः स्वजनसमूहश्चेति तृप्तः तिष्ठति, तथापि कल्पनारूपत्वात् औदयिकत्वात् परत्वात् स्वसत्तारोधकाष्टकर्मबंधनिदानरागद्वेषोत्पादकत्वात् दुःखं एव तया इति,मरुमरीचिकाकल्पा तृप्तिः न सुखहेतुः, तुपुनः भ्रांतिशून्यस्य मिथ्यात्वावबोधरहितस्य सम्यग् ज्ञानोपयुक्तस्य स्वतत्वाभिमुखस्य तथ्या सत्या स्वस्वभावाविर्भावानुभवात्मिका तृप्तिः सुखहेतुः किं भूता? सातृप्तिः सात्मवीर्यविपाककृत् , आत्मना सह सात्मा तस्य यद् वीर्यं तस्य विपाकः पुष्टिविशेपः तं करोतीति कृत् इत्यनेन स्वभावगुणानुभवोत्था तृप्तिः आत्मनः सहजं वीर्यं पुष्टीकरोति, तेन सामर्थ्येन गुणप्राग्भावः अत गुरुचरणसेवनागमश्रवणतत्वग्रहणादिना आध्यात्मिकी तृप्तिः विधेया इत्युपदेशः ॥ ४ ॥

**पुद्गलैः पुद्गलास्तृप्तिं यांत्यात्मा पुनरात्मना । परतृप्तिसमारोपो, ज्ञानिनस्तन्न युज्यते ॥ ५ ॥**

व्या० पुद्गलैरिति—पुद्गलैः शरीरधनवसनभोजनस्वजनादिभिः, पुद्गलाः शरीरादयः पुद्गलोपचयरूपां तृप्तिं याति स्वरूपास्वादनेन तृप्तिः पुनः उपदिशति ज्ञानिनः अनेकांतानंतस्वपरपदार्थपरीक्षादक्षस्य तद्भ्रांतिजन्याभिमानं परतृप्ति-

समारोपः, परैः पुद्गलैः तृप्तिः परतृप्तिः परतृप्तौ समारोपः आत्मतृप्तिमन्यतारूपः न युज्यते न घटते । भावना च सम्यग् ज्ञानी तु यथार्थावबोधी तु आत्मधर्मे एव आत्मनि अंगीकरोति पौद्गलिकोपचये न रज्यते, पुद्गलास्वादनेन सुखाव भास एव मिथ्याज्ञानं उक्तं च—

तवइ तवं चरइ चरणं सुअंपि नव पुव्वजाव अब्भसई, जा परसुहे सुहत्तं ता नो सम्मत्तविन्नाणं ॥ १ ॥

पुनः श्रीहरिभद्रपूज्यः—

सुअवं सीलवं चाई, जिणमग्गायरणारई । परं वा परसंगं वा धन्नमन्नई जो जडो ॥ २ ॥

यच्च आत्मनः स्वरूपं सहजं ज्ञानादिकं तदेव धर्मः इति तत्वं ॥ ५ ॥

**मधुराज्यमहाशाका—ग्राह्ये बाह्ये च गोरसात् । परब्रह्मणि तृप्तिर्या, जनास्तां जानतेऽपि न ॥ ६ ॥**

व्या० मधुराज्यइति—या परब्रह्मणि सुधात्मनि अमूर्त्तानंतज्ञानघने तृप्तिः स्वरूपाशमतालिंगनानंदचिद्विलासरूपा जनाः तत्वावलोकनयनविकलाः तां शुद्धात्यंतैकांताध्यात्मस्वभावानुभवरूपां तृप्तिं जानतोऽपि न न चैव जानते इति सा ज्ञानग्रहणेऽपि नास्ति, अतः कुतोऽनुभवः ? या तृप्तिः मधुराज्यमहाशाकाग्राह्ये पुनः गोरसात् अबाह्ये भोजने न, मधुरं आज्यं घृतं मधुराज्यं महांतः शाकाः व्यंजनानि तैरग्राह्ये पुनः गोरसः दध्यादि तस्मात् बाह्ये, युक्तं एवंविधे भोजने सा तृप्तिः न । अथवा कथंभूते ब्रह्मणि ? मधुराज्यमहाशाकाग्राह्ये मधु मिष्टं राज्यं, तत्र महती आशा इच्छा येषां ते मधुराज्यमहाशाकाः तैः परिग्रहैश्वर्याभिलाषुकैः अग्राह्ये गृहीतुमशक्ये गोरसात् वाग्रसात् बाह्ये वाचामगोचरे 'अप्राप्यं-

मनसा सह' इति उक्तत्वात् 'अपयस्य पयं नत्थि' इत्याचारांगवचनात् । एवंविधे परब्रह्मणि परमात्मनि या तृप्तिः सा लोकैर्न ज्ञायते एव अतः पुद्गलोपचारसहस्रैः सा तृप्तिर्न भवति ॥ ६ ॥

**विषयोर्मिविषोद्गारः स्यादतृप्तस्य पुद्गलैः । ज्ञानतृप्तस्य तु ध्यान–सुधोद्गारपरंपरा ॥ ७ ॥**

व्या० विषयोर्मि इति—अतृप्तस्य स्वरूपास्वादरहितस्य पुद्गलैः अंगनालिंगनादिकैः विषयोर्मिविषोद्गारः स्यात् भवेत् विषयोर्मिः इंद्रियविलासः स एव विषस्योद्गारः प्रकाशः स्यात् । उक्तं च—

जह जह पुग्गलभोगो, तह तह वड्ढइ विसयंपि कसाई । इंदियसुहा दुहा खलु, अगिज्झा तउरत्ताणं ॥ १ ॥ (?)

ज्ञानतृप्तस्य स्वात्मतत्वावबोधपूर्णस्य ध्यानं तत्वैकत्वं तदेव सुधा अमृतं तस्य उद्गारः तस्य परंपरा श्रेणिर्भवेत् निरामयनिर्मलपरमात्मानुभवो तृप्तेः लक्षणं एतत् तत्वभावना तत्वज्ञानतत्वध्यानामृतोद्गारपरंपरावृद्धिः ॥ ७ ॥

**सुखिनो विषयातृप्ता नेंद्रोपेंद्रादयोऽप्यहो । भिक्षुरेकः सुखी लोके, ज्ञानतृप्तो निरंजनः ॥ ८ ॥**

व्या०—सुखिनो विषयातृप्ता इति—अहो इति आश्चर्ये इंद्रोपेंद्रादयः इंद्रः शक्रः, उपेंद्रः कृष्णः, इत्यादयः अनेके न सुखिनः सुखमयाः न । कथंभूता इंद्रोपेंद्रादयः ? विषयातृप्ताः विषयैः मनोज्ञेंद्रियसंयोगैः अतृप्ताः अनेकवनिताविलासषड्रसग्राससुरभिकुसुमवासरम्यावासादिभिः मृदुशब्दाकर्णनवर्ण्यवर्णावलोकनैः (र) संख्यकालभोगैः अतृप्ताः न च एते तृप्तिहेतवः असदारोप एवायं लोके चतुर्दशरज्ज्वात्मके अनंतसकर्मजीवात्मके एकः भिक्षुः आहारागृध्नः संयमयात्रार्थं

भिक्षणशीलः निःपरिग्रहः सुखी अस्ति । ज्ञानं स्वरूपाववोधः तेन तृप्तः निरंजनः रागाद्यंजनश्यामतारहितः स्वधर्मभोगव स्वात् यद्वस्तुनि यद्धर्मः न भवति ततो न जायते तृप्तिः । उक्तंच विशेषावश्यकेः—

जत्तोच्चियपच्चक्खं सोम्मसुहं नत्थि दुक्खमेवेदं । तप्पडियारविभत्तं, तो पुण फलंति दुक्खंति ॥ १ ॥

विसयसुहं दुक्खं चिय दुक्खंप्पडियारओत्तिगच्छव । तं सुहमुवयाराओ न ओवयारो विणा तच्चं ॥ २ ॥

सायासायं दुक्खं तव्विरहम्मि अ सुहं जउत्तेणं । देहिंदियेसु दुक्खं सुक्खं देहेंदिआभावो ॥ ३ ॥

इति सातासातयोर्विपाकभेद एव नत्वावरणे अव्याधावरणत्वं तु उभयोरपि यच्च स्वगुणान् घातयति तद् दुःखं कः सुखत्वेनोररीकुरुते ? इति आत्मनः ज्ञानानंदानुभवा तृप्तिः प्रशस्या नौपाधिकी इत्यनेन तया एव सम्यग् दर्शनिनः स्तुवंति अर्हंतं पूजयंति परमात्मानं देशविरता अपि सामायिकपौषधोपवासिनः आत्मानुभवलवास्वादनार्थमेव तिष्ठंति एकांते मुनयः तन्निष्पादनाय त्यजंति पंचाश्रवान् तद्विघाताय गृह्णंति भीष्मग्रीष्मतप्तशिलातापतापनां शिशिरहिमनिशाकरकराभिघातक्षुब्धा वसंति ( अवसना ) वने स्वाध्यायंति आगमव्यूहान् क्षमादिधर्मद्वारा भावयंति अज्ञानं तत्वज्ञानेन आरोहंति गुणश्रेणिशृंगे चिंतयंति तत्वैकत्वं तत्वसमाध्यर्थमेव प्राणायामादिप्रयासः जिनकल्पादिकल्पः इति स्वस्वभावानुभवतृप्तिः सर्वैरभ्यस्या ॥ ८ ॥

इति व्याख्यातं तृप्त्यष्टकं दशमम् ।

## ॥ अथ निर्लेपाष्टकम् ॥

अथ अलिप्तस्य तत्वसमाधिर्भवति पूर्णानंदतृप्तिरपि अलिप्तस्य तेन निर्लेपाष्टकं वितन्यते । चैतनस्य सकलपरभावसंयोगाभावेन व्याप्यव्यापकग्राहककर्त्तृत्वभोक्तृत्वादिशक्तीनां स्वभावावस्थानं निर्लेपः नामतो निर्लेपः अभिलाप्यात्मकजीवाजीवानां स्थापनानिर्लेपः निर्ग्रंथाकारादिः द्रव्यनिर्लेपः कांस्यपात्रादि तद्व्यतिरिक्तः शेषस्तु पूर्ववत् भावनिर्लेपः जीवाजीवभेदाश्च अजीवो धर्माधर्माकाशादिः जीवस्तु समस्तविभावाभिष्वंगरहितः मुक्तात्मा नयैस्तु द्रव्यपरिग्रहादिष्वलिप्तः नैगमेन संग्रहेण जीवः जात्या अलिप्तः व्यवहारेणालिप्तः द्रव्यतः त्यागी शब्दनयेन सम्यग्दर्शनसम्यग् ज्ञानपरिच्छिन्नपरभावपरित्यागी तन्निमित्तभूतानि धनस्वजनोपकरणानि तेष्वनासक्तः, समभिरूढनयेन अरिहंतादिनिमित्तैर्बहुतरैः परिणमनैरलिप्तत्वात् क्षीणमोहो जिनः केवली च लिप्तः एवंभूतेन सिद्धः सर्वपर्यायैरलिप्तत्वात् , वाचनांतरे तु नैगमालिप्तः अंशत्यागी नैगमाकाररूपेण संग्रहेण सम्यग्दर्शनासत्तया आत्मानं सर्वथा विभक्तत्वात् व्यवहारेण तच्छ्रद्धया अपास्तरागादिलेपत्यागात्,ऋजुस्तु सन्निमित्तादिष्वरक्तत्वेनावलंबनात्, शब्दतः अभिसंधिजवीर्यबुद्धिपूर्वकोपयोगस्य रागादिषु अपरिणमनात् समभिरूढतः सर्वचेतना सर्वजीवस्य विभावाश्लेपरहितत्वात् , एवंभूततः पूर्वाभ्यासचक्रभ्रमादिभावोपग्राहिसर्वपुद्गलसंगरहितस्य सिद्धस्य निर्लेपत्वं पुनर्निक्षेपत्रये नयचतुष्टयं भावनिक्षेपे पर्यायालिप्तत्वेन 'अंतिमनयत्रयं' इतितत्वार्थवृत्तेराशयः अत्र भावसम्यक्त्वसाधकनिर्लेपाधिकारः ।

**संसारे निवसन् स्वार्थ–सज्जः कज्जलवेश्मनि । लिप्यते निखिलो लोको, ज्ञानसिद्धो न लिप्यते ॥१॥**

व्या० संसार इति—निखिलः समस्तः लोकः कज्जलवेश्मनि रागादिपापस्थानविभावतन्निमित्तीभूतधनस्वजनादिगृहे संसारे निवसमानः, स्वार्थसज्जः स्वस्य आरोपात्मना कृतः अर्थः अहंकारममकारादिरूपः स्वार्थः तत्र सज्जः सावधानः लिप्यते रागादिभावकर्माभिष्वंगतः समस्तात्मीयक्षयोपशमाभावपरानुगतः सर्वसत्तावरकत्वेन भावकर्मद्रव्यकर्मनोकर्मलेपैर्लिप्यते । तथा ज्ञानसिद्धः हेयोपादेयपरीक्षापरीक्षितसर्वभावः स्वात्मनि स्वात्मा अन्यत्र परत्वोपयुक्तः स्वात्मारामी स्वरूपविलासी न लिप्यते त्रिविधकर्मोपचयैर्नावगुंठ्यते अतः आत्मधर्मावभासनतदुपादेयतया यतितव्यमित्युपदेशः ॥१॥

**नाऽहं पुद्गलभावानां, कर्ता कारयितापि च । नानुमंतापि चेत्यात्म—ज्ञानवान् लिप्यते कथम् ॥ २ ॥**

व्या० नाहमिति—इति अमुना प्रकारेण यथार्थावभासनेन भेदज्ञानविभिन्नात्मस्वरूप आत्मज्ञानवान् कथं लिप्यते? नैवेति, इति किं? अहं विमलकेवलालोकमयः, स्वकीयपारणामिकपर्यायोत्पादकत्वव्ययध्रुवत्वज्ञायकत्वभोक्तृत्वरमणत्वादिभावानां कर्ता पुद्गलभावानां द्रव्यकर्म नोकर्महिंसादिपापव्यापाराणां योगप्रवृत्तेश्च कर्त्ता न नैव पुद्गलग्रहणमोचनरूपं मम कार्यं वर्णादीनां ग्रहणास्कंदनानां नहि कर्ता चपुनः पुद्गलभावानां पूर्वोक्तानां अहं कारयिता परस्मात् कारयतीति कारयिता न चपुनः न अनुमंता पौद्गलिकवर्णादीनां शुभानां नानुमोदनशीलः अहमिति सकलपुद्गलत्रैकालिकाग्राहकाभोक्तृत्वाकारकत्वात्मज्ञानवान् स न लिप्यते लेपो हि पुद्गलानुयायिनो चेतनया भवति सर्वथा विधिविच्छिन्नसंगस्य न लेपः इतिगाथार्थः ॥ २ ॥

**लिप्यते पुद्गलस्कंधो, न लिप्ये पुद्गलैरहम् । चित्रव्योमांजनेनेव ध्यायन्निति न लिप्यते ॥ ३ ॥**

व्या० लिप्यते इति—लिप्यते अन्योन्याश्लेषेन संक्रमादिना पुद्गलस्कंधः अन्यैः पुद्गलैः लिप्यते उपचयी भवति स्वजातिद्रव्यपरवर्त्तनपरिणामिकस्याधिकरसोत्पत्तिबंधनधर्मत्वात् पुद्गलानां संबंधः त्रिगुणः पंचगुणेन बंध पंचगुणः सप्त-गुणेन एवं सर्वत्र द्विगुणः चतुर्गुणेन चतुर्गुणः षड्गुणेन षड्गुणोऽष्टगुणेन एवं बंधसंयोगो भवति । अत्र स्निग्धरूक्षौ स्पर्शस्थौ अपि एकांतेन न स्कंधहेतुः स्पर्शस्य स्कंधकरणउपादानाभावात् न रसस्थौ रसस्य आस्वादनरूपत्वात् अतः पूरणगलनगुणविभागानामेव द्व्यधिकत्वं स्निग्धरूक्षस्पर्शसंगपरिणतं स्कंधत्वहेतुः अतः पुद्गलैः पुद्गला एव लिप्यंते । अहं निर्मलानंदचिद्रूपः न पुद्गलाश्लेषी अतः शुद्धात्मा पुद्गलैर्न लिप्यते वस्तुवृत्त्या पुद्गलात्मनोः तादात्म्यसंबंधएव नास्ति संयोगसंबंधस्त्वौपाधिकः चित्रांजनैर्न व्योम इव इति ध्यायन् न लिप्यते यथा व्योम आकाशं चित्रैः अंजनैः संलिप्यमा-मानपि न लिप्यते तथा अहमपि अमूर्त्तात्मस्वभावः पुद्गलैः एकक्षेत्रावगाढैः न लिप्ये योहि आत्मस्वभाव-वेदी स्ववीर्यज्ञानादिशक्तिं आत्मनि व्यापारयन् अभिनवकर्मग्रहणैर्न लिप्यते यावती आत्मशक्तिः परानुयायिनी तावत् आश्रवः स्वरूपानुयायिनी स्वशक्तिः संवरः इति रहस्यं । अत्र च आत्मज्ञानमात्रसंतुष्टा रागद्वेषप्रविष्टाः सम्यग्दर्शनादि-गुणभ्रष्टाः आत्मानं अबंधतया जानंति ते निरस्ताः, उक्तं च उत्तराध्ययने—

भणंताअकरंताय बंधमुक्खपइन्निणो । वायावीरियमित्तेणं समासासंति अप्पयं ॥ १ ॥

न चित्ता तायए भासा कओ विज्जाणुसासणं । विसन्ना पावकम्मेहिं, बाला पंडियमाणिणो ॥ २ ॥

अतएव तत्त्वश्रद्धानसम्यग्ज्ञानोपयुक्ता यदात्मनः क्षयोपशमिकचेतना वीर्यादिशक्तीन् परभावविभावान् आकृष्य

आत्मगुणे प्रवर्त्तयंति तावती अवंधकता शेषा, यावती परानुगा विषयकषायचापल्यताशक्तिः तावती वंधकता एवं सर्वात्मशक्तिः स्वरूपविश्रामरमणरूपा तदा सर्वात्मना अवंधकः इति सिद्धांतः ॥ ३ ॥

**लिप्तता ज्ञानसंपातप्रतिघाताय केवलम् । निर्लेपज्ञानमग्नस्य क्रिया सर्वोपयुज्यते ॥ ४ ॥**

व्या० लिप्तता इति—निर्लेपज्ञानमग्नस्य शुद्धस्याद्वादात्मज्ञानमग्नस्य पुंसः क्रिया आवश्यककरणरूपा लिप्तता ज्ञानसंघातप्रतिघाताय ज्ञानं विभावचेतनोपयोगः तत्र संपातः पतनं तस्य प्रतिघाताय निवारणाय केवलं उपयुज्यते उपकारीभवति, इत्यनेन ध्यानारूढस्य न क्रियाकरणं, किंतु भावना चिंता ज्ञानवतः विघ्नवारणाय क्रिया उपकारिणी ध्यानाधिरूढस्याप्रच्युतात्मस्वभावानुभवस्थस्य विघातनी आगमेऽपि पूर्वं यदमृतकुंभोपमं तदेवोपरिविपकुंभोपमं । उक्तंच:—

जा किरिया सुद्धुयरी सा विसुद्धीए न अप्पधम्मोति । पुव्विं हीयायपच्छा अहिया जह निस्सहाइतिगं ॥ १ ॥

अतएव आत्मस्वरूपाववोधैकत्वं हितं ॥ ४ ॥

**तपःश्रुतादिना मत्तः, क्रियावानपि लिप्यते । भावनाज्ञानसंपन्नो, निःक्रियोऽपि न लिप्यते ॥ ५ ॥**

व्या० तप इति—क्रियावान् अपि जिनकल्पादितुल्यक्रियाभ्यासी अपि तपः श्रुतादिना मत्तः मानी अभिनवकर्मग्रहणैर्लिप्यते, न च रुषादयोत्कृष्टा क्रिया हितकारिणी । उक्तं आचारांगेः—"सेवतां कोहं च माणं च लोभं च एवं पासगस्स दंसणं उवरभत्थस्स पलियंतकरस्स आयाणं संगडं, इति । पुनः "वंतो लोगस्सणसेमतिमं पडिक्कमज्जासित्तिवेमि । पुनः पुनः "परिन्नायलोगसन्नं च बाले पुणणिहे कामसमणुन्ने असमितदुक्खे दुक्खाणमेवं अणुपरियहुंति ।" अतः क्रिया-

दिमत्तः आहाराश्चत्वारः उवलोकदुःखशोकवितिगिच्छामोहाभिधानपंचदशसंज्ञया धर्माभ्यासः 'प्रवृत्तिर्नधर्मः' इत्याचारांगवृत्तौ । भावना अनुप्रेक्षातद्ज्ञानमग्नः निःक्रियः अपि तादृक्तीव्रतरवीर्यावृत्तो न लिप्यते न वध्यते। उक्तंच सूत्रकृताङ्गे—

नकम्मणा कम्मखवंति वाला, अकम्मणा कम्म खवंति वीरा । मेहाविणो लाभमयावतीता संतोसिणो नोपकरंति पावं ॥१

जहा कुंभो सअंगाइं सए देहे समाहरे । एवं पावाइं मेहावी अज्झप्पेणं समाहरे ॥ २ ॥

इत्यनेन भावनाज्ञानं तत्त्वैकत्वानुभवान्वितं सम्यग्ज्ञानं, तेन युक्तः न लिप्यते सर्वः सत्क्रियाभ्यासः शुद्धसिद्धात्मस्वरूपाविर्भावसाध्यतत्त्वज्ञानानुभवयुक्तस्य हिताय भवति ॥ ५ ॥

**अलिप्तो निश्चयेनात्मा, लिप्तश्च व्यवहारतः । शुद्ध्यत्यलिप्तया ज्ञानी, क्रियावान् लिप्तया दृशा ॥ ६ ॥**

व्या० अलिप्त इति—निश्चयरूपेण नयेन स्वरूपेण जात्या इत्यर्थः आत्मा चेतनः अलिप्तः पुद्गलाश्लेपरहितः, चपुनः व्यवहारतः वाह्यतमप्रवृत्तिसोपाधिकत्वतः अयं आत्मा लिप्तः अतः परसंसर्गजन्यव्यवहारत्यागे यतितव्यं, अतएव अलिप्तया दशा शुद्धचिदानंदावलोकनात्मकया आत्मानं आत्मतया परं च परतया अरक्तादिष्टदृष्ट्या ज्ञानी वेद्यसंवेदकः स्वसंवेदज्ञानी शुद्ध्यति शुद्धो भवति सर्वविभावमलापगमनेन निर्मलो भवति । अन्यः क्रियावान् लिप्तया दृशा लिप्तोहं अशुद्धाचरणैः तेन शुद्धाचरणेन पूर्वप्रकृतीः क्षपयित्वा अभिनवाकरणेन आत्मानं मोचयामि इति दृष्ट्या क्रियां वंदननमनादिकां कुर्वन् शुद्ध्यति निर्मलो भवति इति निश्चयव्यवहारगौणमुख्यवतां साधनक्रमः ॥ ६ ॥

**ज्ञानक्रियासमावेश—सहैवोन्मीलने द्वयोः । भूमिकाभेदतस्त्वत्र, भवेदेकैकमुख्यता ॥ ७ ॥**

व्या० ज्ञान इति—द्वयोः दृष्ट्योः उन्मीलने उद्घाटने सहैव समकालमेव नह्येकांतज्ञानरुचिः सम्यग्दर्शनी, न ह्येकांतक्रियारुचिः सम्यग्दर्शनी, किंतु सापेक्षदृष्टिरेव सम्यग्दर्शनी, अतः ज्ञानक्रियासमावेशः उभयोः संयोग एव साधनत्वेन निर्धार्यः तत्र कचवरसमन्वितमहागृहशोधनप्रदीपपुरुपादिव्यापारवदिह जीवः स्वरूपकर्मकचवरभूतस्वरूपशोधनालंबनो ज्ञानादिना स्वभावभेदव्यापारोऽवसेयः । तत्रोक्तं श्रीआवश्यकनिर्युक्तौ:—

नाणं पगासगं सोहगो तवो संजमो उ गुत्तिकरो । तिण्णंपि समाओगे मोक्खो जिणसासणे भणिओ ॥ १ ॥

तथाप्युपदेशपदप्रकरणे—"क्रियाकृतकर्मक्षयः मंडूकचूर्णतुल्यः, ज्ञानकृतकर्मक्षयस्तद्भस्मकल्पः एव ज्ञातव्यः तुपुनः याच एकैकमुख्यता अत्र साधनावसरे सा भूमिकाभेदतः भूमिकागुणस्थानावस्था तस्याः भेदतः ध्यानाद्यवसरे ज्ञानं मुख्यतः अर्वाक्क्रियैव मुख्यतः तथा सर्वत्र साधनसामग्री यथायोगं कार्या । उक्तं भगवतीटीकायांः—

जई जिणमयं पवज्जह ता मा विवहारनिच्छयमुयह । इक्केण विणा तित्थं छिज्जई अन्नेणउत्तच्चं ॥ १ ॥

अतः साधनोद्यताः सर्वमपि स्वस्थाने स्थापयंति ॥ ७ ॥

**सज्ञानं यदनुष्ठानं, न लिप्तं दोषपंकतः । शुद्धबुद्धस्वभावाय, तस्मै भगवते नमः ॥ ८ ॥**

व्या० सज्ञानमिति—यदनुष्ठानं यदाचरणं सज्ञानं सम्यग्ज्ञानयुक्तं, दोषाः इहलोकाशंसापरलोकाशंसाक्रोधमानादयः तैः न लिप्तं नाश्लेषितं, तस्मै भगवते पूज्याय नमः, किंभूताय भगवते, शुद्धबुद्धस्वभावाय, शुद्धः सर्वपुद्गलाश्लेषरहितः बुद्धः ज्ञानमयः, स्वभावो यस्य सः तस्मै इत्यनेन यथा सत्ता तथा निष्पन्नः निरावरणः सिद्धस्वभावः तस्य साधका ज्ञान-

क्रिया सावधाना, तत्र भावना अनादिघोषणाघोषिततपरभावात्मबुद्धिरूपा सद्ज्ञानपरभावास्वादनसंमिलितविभावाऽभ्र-पटलतिरोभूततत्वज्ञानभानुबहूलीभूतमिथ्यात्वासंयममहामोहतिमिरांधीभूतभूतानां मध्ये केचन सदागमांजनतत्वपीत पानीयपानोत्पन्नसद्विवेकाः पश्यंति ज्ञानावरणादिकर्मच्छादितविभावमलतन्मयीभूतशरीरादिपुद्गलस्कंधैकताप्राप्तोऽपि मूर्त्तभावोऽपि छिन्नोऽपि अमूर्त्ताखंडज्ञानानंदानंताव्याबाधस्वरूपमात्मानं भुज्यमानविषया अपि रोचयंति स्वतत्वानुभवनं, नानोपायार्जितमपि त्यजंति धनौषधविचित्रचित्रतोद्भूतं, वर्जयंति स्वजनकवर्गं कोटिदानदायका अपि चरंति गोचरीं, मृदुनवनीतकुसुमशय्याशायिनोऽपि, शेरते घातोपलशिलाभूमौ एकात्मतत्त्वसहजस्वभावामूर्त्तानंदलीलालुब्धा ज्ञानक्रियाभ्यासतः, साधयंति निरावरणात्यंतैकैकांतिकवि द्वंद्वनिरामयाविनाशि सिद्धस्वरूपं एतत्साधनोद्यताय भगवते नमः ॥ ८ ॥

इति व्याख्यातं निर्लेपाष्टकम् एका दशमम् ॥

---

अथ निर्लेपत्वदृढीकरणार्थं निःस्पृहत्वं विस्तार्यते, तत्र निःस्पृहत्वं सर्वपरभवानभिलाषरूपं, इच्छा मूर्छानिरावरणं, स्पृहा नाम इच्छा, तदभावो निःस्पृहत्वं, तत्र नाम निःस्पृह उल्लापरूपः, स्थापनानिःस्पृह मुनिप्रतिमादिः, द्रव्यनिःस्पृह इह परत्राधिकाभिलाषेन अल्पानिच्छकः अथवा भावधर्मास्वादनमंतरेण तत्स्वरूपापरज्ञानेन धनादिषु अनिच्छुश्च तावन्निःस्पृहः अप्रशस्तः वेदांतादिकुतीर्थोपदेशेन एकांतमुक्तिरक्तः, धनादिषु निःस्पृहः स प्रशस्तः, स्याद्वादैकांतपरीक्षा-परिच्छिन्नात्मतत्वानुभवरुचिपिपासिताः सर्वमपि हेयीकुर्वंति परभावं, भवंति स्वरूपलालितचेतसः, तत्र साधनार्थं आदि

नयचतुष्टयेन सिद्धत्वं नयत्रयेण तथा जीवाजीवे निःस्पृहः नैगमेनअजीवेनिस्पृहः संग्रहव्यवहाराभ्यां, ऋजुसूत्रेण स्वभोग्य-भोज्येषु शब्दसमभिरूढाभ्यां सन्निमित्तपरायत्तसाधनपरिणामेषु एवंभूतेन आत्मीयसाधनपरिणामापन्नभेदज्ञानसविकल्पचरणशुक्लध्यानशैलेषीकरणादिषु निःस्पृहः । अत्र आद्यनयचतुष्टयनिःस्पृहस्यावसरः भावना च अनादौ संसारे स्पृहाकुलितैर्बहुशः प्राप्तं दुःखलक्षं तेन परभावस्पृहा निरीहेन भवितव्यंः—

**स्वभावलाभात्किमपि, प्राप्तव्यं नावशिष्यते । इत्यात्मैश्वर्यसंपन्नोनिःस्पृहो जायते मुनिः ॥ १ ॥**

व्या स्वभाव इति—स्वभावः आत्मधर्मज्ञानदर्शनरमणाव्यावाधामूर्त्तानंदरूपाविच्छिन्नसिद्धत्वशुद्धपारिणामिकलक्षणः तस्य लाभात् । अन्यत्किमपि प्राप्तव्यं लब्धुं योग्यं न अवशिष्यते अवशिष्टोऽस्ति आत्मस्वरूपलाभ एव लाभः इति आत्मैश्वर्यं स्वरूपसाम्राज्यं तेन संपन्नः संयुक्तः मुनिः ज्ञपरिज्ञया ज्ञात्वा प्रत्याख्यानपरिज्ञया प्रत्याख्यातद्रव्यभावाश्रवः साधुः नि स्पृहः सर्वशरीरोपकरणपरिवारयशोवहुमानादिषु स्पृहारहितः इच्छारहितः जायते भवति नह्यनादितृष्णास्वभावोपभोगमंतरेणोपशाम्यति ॥ १ ॥

**संयोजितकरैः के के, प्रार्थ्यंते न स्पृहावहैः ?। अमात्रज्ञानपात्रस्य, निस्पृहस्य तृणं जगत् ॥ २ ॥**

व्या० संयोजित इति—स्पृहावहैः इच्छामग्नैः पुरुषैः के के जनाः परिग्रहभारभुग्ना न प्रार्थ्यंते न याच्यंते? किंभूतैः? स्पृहावहैः संयोजितौ करौ येषां ते संयोजितकराः तैः इत्यनेन विषयाशालोलुपैः अनेकान्यनृपसेवनोद्यतैः भवितव्यं भवति ।

मात्रा मानं तेन रहितं अमात्रं च तत् ज्ञानं च तत् अमात्रज्ञानं तस्य पात्रं स्थानं तस्य साधोः निःस्पृहस्य स्पृहारहितस्य जगत् तृणं तृणप्रायं परभावेच्छामुक्तस्य निर्ग्रंथस्य जगत् तृणं निःसारं स्वात्मस्वरूपं गाथा ।

तिणसंथारनिसन्नो, मुनिपवरोभट्ठरागमयमोहो । जं पावइ मुत्तिसुहं, कत्तो तं चक्कवट्ठीवि ॥ १ ॥

आयसहावविलासी, आयविसुद्धोवि जो निए धम्मे । नरसुरविसयविलासं, तुच्छं निस्सारमन्नंति ॥ २ ॥

**छिंदंति ज्ञानदात्रेण, स्पृहाविषलतां बुधाः । मुखशोकं च मूर्छां च, दैन्यं यच्छति यत्फलम् ॥ ३ ॥**

व्या० छिंदंति इति—बुधाः तत्वज्ञाः ज्ञानदात्रेण स्पृहाविषलतां स्पृहा एव विषवल्ली तां छिंदंति यस्याः फलं यत्फलं मुखशोकं चपुनः मूर्छां च पुनः दैन्यं यच्छति ददाति इत्यनेन स्पृहाविषलता मुखशोकादिकं वितरति इच्छकः दीनो भवति तेन विषयविषोपमविषयस्पृहा निवारणीया इति ॥ ३ ॥

**निष्कासनीया विदुषा, स्पृहा चित्तगृहाद्बहिः । अनात्मरतिचांडालीसंगमंगीकरोति या ॥ ४ ॥**

व्या० निष्कासनीया इति—विदुषा पंडितेन आत्मसमाधिसाधनोद्यतेन स्पृहा पराशा चित्तगृहात् मनोनिकेतनात् बहिर्निष्कासनीया दूरीकरणीया स्पृहा हि लोभपर्यायः लोभश्च कषायपरिणामः तद्विगम एव श्रेयान् या स्पृहा अनात्मरतिचांडालीसंगं अनात्मा परभावाः तेषु रतिः रमणीयतापरिणतिः सा एव चांडाली तस्याः संगं अंगीकरोति अतः स्पृहा त्याज्या । उक्तं च—

जे परभावे रत्ता, मत्ता विसयेसु पावबहुलेसु । आसापासनिबद्धा, भमंति चउगई महारन्ने ॥ १ ॥

परभाववृत्तिरेव विभावः आत्मशक्तिध्वंसनमुद्गरः अतो निरस्तपराशापाशा निर्ग्रंथाः स्वरूपचिंतनस्वरूपरमणानुभवलीनाः पीनाः तत्वानंदे रमंते स्वरूपे रमंते विरमंति विषयविरूपभवकूपपाततः ॥ ४ ॥

**स्पृहावंतो विलोक्यंते, लघवस्तृणतूलवत् । महाश्चर्यं तथाप्येते मज्जंति भववारिधौ ॥ ५ ॥**

व्या० स्पृहावंत इति—स्पृहावंतः परेच्छानिरताः तृणतूलवल्लघवः तुच्छा अनिर्मला विलोक्यंते । उक्तं च—

तूलं तृणादपि लघु, तूलादपि हि याचकः । वायुना किं न नीतोऽसौ, ? मामपि प्रार्थयिष्यति ॥ १ ॥

तदाश्चर्यं लघवोऽपि एते स्पृहादीना अपि भववारिधौ भवसमुद्रे मज्जंति । अन्यत्र लघुत्वं भवमज्जनहेतुरेव यद्यपि प्रार्थनादि दानव्यवहाराः तथापि त्रिभुवनधनस्वजनपिपासागरिष्ठाः ब्रुडंति इत्यर्थः ॥ ५ ॥

**गौरवं पौरवंद्यत्वात्प्रकृष्टत्वं प्रतिष्ठया । ख्यातिं जातिगणात्, स्वस्य प्रादुःकुर्यान्न निःस्पृहः ॥ ६ ॥**

व्या० गौरवमिति—निःस्पृहः लौकिकस्पृहारहितः पौरवंद्यत्वात् नागरिकलोकवंद्यत्वात् गौरवं गुरुत्वं प्रतिष्ठया शोभया प्रकृष्टत्वं जातिगुणात् स्वस्य कुलसंपन्नतादिख्यातिं न प्रादुःकुर्यात् न प्रकटीकुर्यात् इत्यादि निःस्पृहाः महत्वं न ख्यापयंति न विशदीकुर्वंति निःस्पृहस्य न यशोमहत्त्वाभिलाषः ॥ ६ ॥

**भूशय्या भैक्षमशनं, जीर्णं वासो गृहं वनम् । तथापि निःस्पृहस्याहो, चक्रिणोऽप्यधिकं सुखम् ॥ ७ ॥**

व्या० भूशय्या—इति भूः वसुंधरा एव शय्या पल्यंकः भैक्षं भिक्षया जातं भैक्षं अशनं भोजनं । उक्तं च—

अहो जिणे हिं असावज्जा, वित्ती साहूण देसिआ। मोक्खसाहणहेउस्स, साहुदेहस्स धारणा ॥ १ ॥

तथाच वासो वस्त्रं जीर्णं गृहं स्थानं वनं तथापि अहो इति अद्भुतं निस्पृहस्य वाह्यसंपद्विकलस्यापि सुखं चक्रिणः सकाशात् स्वं चक्रवर्त्तितः सुखं अधिकं अत्यंतं इति चक्रवर्त्यादिगत्वरैः औपाधिकैः सुखैः सकाशात् मुनिस्वरूपजैः सहजानश्वरैः परमानंदसुखैः पूर्णः यतः जातिभेद एवायं इंद्रियात्मसुखयोः इंद्रियजे सुखे सुखत्वं आरोपितमेव न च पुद्गलस्कंधे तु सुखं सुखहेतुत्वं च आत्मन्येवाच्छिन्न सुखपरंपरासुखस्य कर्तृत्वादिकारकषट्कं आत्मन्येव अतो वास्तवं सुखं जिनाज्ञानिगृहीतपरभावस्य निःस्पृहमुनेरेव अतो निःस्पृहस्य महदिंद्रियागोचरं स्वाभाविकं सुखं इति ॥ ७ ॥

**परस्पृहा महादुःखं, निःस्पृहत्वं महासुखम्। एतदुक्तं समासेन, लक्षणं सुखदुःखयोः ॥ ८ ॥**

## इति निःस्पृहाष्टकम्।

व्या० परस्पृहा इति—परस्य परवस्तुनः परात् वा स्पृहा आशा महादुःखं महत्कष्टं निःस्पृहत्वं निर्वांछकत्वं महासुखं महानंद इति सुखदुःखयोः समासेन संक्षेपेण एतद् लक्षणं उक्तं कथितं इत्यनेन पराशा एव दुःखं यच्च निर्विकाराखंडसच्चिदानंदस्य स्वाभाविकात्मधर्मभोक्तुः परभावाभिलाष एव दुःखं तर्हि किं पराशा इति अस्यात्मनः स्वपरविवेकनिगृहीतपरभावाविर्भावितात्मानंतानंतानंदस्य निःस्पृहत्वं धर्मः तदास्वादनेन सुखमिति अतएव स्पृहा त्याज्या स्पृहा हि स्वसामर्थ्यशून्यस्य भवति अयं तु पूर्णानंदाखिलज्ञेयज्ञानवान् परमः पदार्थः सर्वपदार्थावगमस्वभावः शुद्धात्मीयानंदभोगी तस्य अ-

नादिस्वतत्वानुभवभ्रष्टत्वेन परस्पृहां गतस्यापि सांप्रतं अव्याबाधात्मभावभावनया टंकोत्कीर्णन्यायेन अवगतात्मस्वरूपस्य स्पृहा पराशा न भवति इत्युपदेशः ॥ ८ ॥

इति व्याख्यातं निःस्पृहाष्टकम् ॥ १२ ॥

## ॥ अथ मौनाष्टकम् ॥

एते च गुणाः पूर्वोक्ताः मुनेर्निर्ग्रंथस्य भवंति अतः मुनिस्वरूपं निर्दिशति । सन्ति च लोके अनिर्ग्रंथाः निर्ग्रंथारोपमताः आत्माऽशुद्धाभिमानतः तत्वविवेकविकलाः तेषामेवोपदेशाय विशुद्धगुरुतत्वावबोधार्थं चाह । तत्र मन्यते त्रिकालविषयत्वेन आत्मानमिति मुनिः तत्र नाममुनिः स्थापनामुनिः सुगमः द्रव्यमुनिः ज्ञशरीरभव्यशरीरतद्व्यतिरिक्तभेदात् अनुपयुक्तो लिंगमात्रद्रव्यक्रियावृत्तिसाध्योपयोगशून्यस्य प्रवर्त्तनविकल्पादिषु कषायनिवृत्तस्य परिणतिचक्रे असंयमपरिणतस्य द्रव्यनिर्ग्रंथत्वं भावमुनिः चारित्रमोहनीयक्षयोपशमक्षयिकोत्पन्नस्वरूपरमणपरभावनिवृत्तः परिणतिविकल्पप्रवृत्तिषु द्वादशकषायोद्रेकमुक्तः नैगमसंग्रहव्यवहारनयैः द्रव्यक्रियाप्रवृत्तद्रव्याश्रवविरक्तस्य मुनित्वं ऋजुसूत्रनयेन भावाभिभिलापसंकल्पोपगतस्य शब्दसमभिरूढैवंभूतनयैः प्रमत्तात् क्षीणमोहं यावत् परिणतौ सामान्यविशेषचक्रे (?) स्वतत्वैकत्वपरमशमतामृतरतस्य मुनित्वं अत्र सम्यग्दर्शनचारित्रप्राग्भाववतो द्रव्यभावाश्रवविरतस्वरूपरतस्यावसरः ।

**मन्यते यो जगत्तत्वं, स मुनिः परिकीर्त्तितः । सम्यक्तमेव तन्मौनं, मौनं सम्यक्तमेव च ॥ १ ॥**

व्या० मन्यते इति—यः शमसंवेगनिर्वेदानुकंपास्तिक्यलक्षणलक्षितः जगद् लोकं जीवाजीवलक्षणं मन्यते जानाति तत्वं यथार्थोपयोगेन द्रव्यास्तिकपर्यायास्तिकस्वभावगुणपर्यायैः निमित्तोपादानकारणकार्यभावोत्सर्गापवादपद्धतिः तां जानाति स मुनिः ( अवगृहीततत्वः ) परिकीर्त्तितः कथितः श्रीतीर्थंकरगणधरैः । मुनेः निर्ग्रंथस्य इदं मौनं, एवेति निर्धारणे तत् सम्यक्तं यत् यथाज्ञातं तथाकृतं इति तत् सम्यक्तं एव मुनित्वं सम्यक्त्वं वा पुनः सम्यक्तं एव मौनं निर्ग्रंथत्वं । अत्र यत् शुद्धश्रद्धाननिर्धारितात्मस्वभावः तत्र अवस्थानं चरणं यच्च सम्यग्दर्शनेन निर्धारितं सम्यग्ज्ञानेन विभक्तं स्वरूपोपादेयत्वं तच्च तथैव भवति रमणं चरणं मुनित्वं अतः सम्यक्श्रद्धागृहीतकरणं तत् एवंभूतनयेन सम्यक्तं एवंभूतनयेन सम्यग्मुनित्वं सम्यक्स्वरूपं इतिज्ञपरिज्ञाप्रत्याख्यानपरिज्ञाप्राप्तं एवं कार्यसाधकं तेन सम्यक्त्वमुनित्वे अभेदः सम्यग्दृष्टिभिः यच्चतुर्थगुणस्थानस्थैः साध्यत्वेन धारितं तथाकरणे यत्र मुनिभावे निष्पादितं सिद्धावस्थायां इत्यनेन शुद्धसिद्धत्वस्य धर्मनिर्द्धारः सम्यक्त्वं । आचारांगेः—जं सम्मंति पासहा तं मोणंति पासहा तं सम्मंति पासह णइ मं सक्कं कामायरेहिं पन्नत्तेहिं गारवावसंठेहिं, मुणी मोणं समाधाय धुणैकम्मशरीरगं पंतं भूहं च सेविति वीरा सम्मत्तदंसिणो" ॥१॥ तथाच पंचास्तिकायेषु जीवः चेतनालक्षणः तत्र स्वीयात्मबद्धोऽपि विभावग्रस्तोऽपि सत्तया निर्मलानंदी निर्धारणाय तदाचरणविगमाय मोहहेतु तत् द्रव्याश्रवान् हेयतयोपलक्षितान् हेयतया करोति इति सम्यक्त्वं मुविस्वरूपं ॥ १ ॥

**आत्मात्मन्येव यच्छुद्धं, जानात्यात्मानमात्मना । सेयं रत्नत्रये ज्ञप्ति–रुच्याचारैकता मुनेः ॥ २ ॥**

व्या० आत्मा इति–अत्र ज्ञानादिगुणानामभेदकरणभूतानां ज्ञायकत्वकार्यकर्ता आत्मा एव अत्रोपादानस्वरूपे षट्कारक-

चक्रमय एव आत्मा स्वयमेव कर्तृकार्यरूपोऽपि कारणरूपसंप्रदानाधिकरणः स्वयमेवेति व्याख्यातं भाष्ये श्रीजिनभद्र-क्षमाश्रमणैः अतएव आत्मा जीवकर्तारूपः आत्मना आत्ममयज्ञानवीर्येण करणाभूतेन आत्मानं अनंतास्तित्ववस्तुत्व द्रव्यत्वसत्त्वप्रमेयत्वसिद्धत्वधर्मकदंबोपेतं कार्यत्वापन्नं आत्मनि आधारभूते अस्तित्वाद्यनंतधर्मपर्यायपात्रभूते जानाति सा इयं जानातिरूपा प्रवृत्तिः सा एव रत्नत्रये सम्यग्दर्शनज्ञानचारित्रलक्षणे ज्ञप्तिः रुचिः आचारः भासननिर्द्धाराचार-रूपः एतेषां एकता अभेदपरिणतिः मुनेः अस्ति इत्यनेन आत्मना आत्मानं ज्ञात्वा तद्रुचिः तदाचरणं मुनेः स्वरूपं। भावना च मिथ्यात्वाज्ञानासंयमैकत्वेन पौद्गलिकसुखं सुखत्वेन निर्धार्य ज्ञात्वा च तदाचरणप्रवृत्तस्यानंतकालं तत्वानव-बोधेन दाघज्वरपरिगत इव मृत्तिकालेप इवावगुंठितः कर्मपुद्गलैः नचोपलब्धः तत्वश्रद्धानज्ञानरमणानुभवलवोऽपि तेनैव निसर्गाधिगमादिकारणेन अनादिनिधनोऽयं जीवोऽनंतज्ञानादिपर्यायालिप्तामूर्त्तस्वभावोऽवगतः निर्द्धारितश्च साध्योऽहं साधकोऽहं सिद्धोऽहं ज्ञानदर्शनाद्यनंतगुणमयोऽहं इति ज्ञप्तिरुचि आचरण रूपं मुनिस्वरूपं उक्तंच—

आत्मानमात्मना वेत्ति, मोहत्यागाद् यदात्मनि। तदेव तस्य चारित्रं, तद्द्ज्ञानं तच्च दर्शनम् ॥ १ ॥

पुनः हरिभद्रपूज्यैः षोडशके—

बालः पश्यति लिंगं, मध्यमवृत्ति (बुद्धि) विंचारयति वृत्तम्। आगमतत्त्वं तु बुधः परीक्षते सर्वयत्नेन ॥ १ ॥

अतः तत्वैकत्वं चारित्रम् ॥ २ ॥

पुनस्तदेव द्रढयति ।

**चारित्रमात्मचरणाद्, ज्ञानं वा दर्शनं मुनेः । शुद्धज्ञाननये साध्यः, क्रियालाभात् क्रियानये ॥ ३ ॥**

व्या० चारित्रमिति—आत्मचरणात् आत्मस्वरूपरमणात् परभावप्रवृत्तित्यागात् चारित्रं आत्मस्वरूपावबोधः ज्ञानं स्वीयासंख्येयप्रदेशव्यापकत्वेन सहजलक्षणज्ञानाद्यनंतपर्यायः अहं नान्यः इति निर्द्धारः दर्शनं इत्यनेन आत्मा ज्ञानदर्शनोपयोगगुणद्वयलक्षणः । एवं उक्तं च भाष्ये आत्मनः गुणद्वयमेव व्याख्यानयंति इति तन्मते ज्ञाने स्थिरत्वं चारित्रं तेन ज्ञानचारित्रयोरभेद एव ज्ञानमेवात्मपरिणाममयी वृत्तिः सम्यक्त्वं आश्रवरोधः तत्वज्ञानैकता चारित्रं एवं व्यापारभेदात् ज्ञानस्यैवावस्थात्रयं । उक्तं च—

एवं जिणपणत्ते सद्दहमाणस्स भावओ भावे । पुरिसस्सा भणिवा ए (?) दंसणसद्दो हवई जुत्तो ॥ १ ॥

तथा च क्रियानये क्रियालाभात् साध्यनिष्पादनाय इति प्रथमं च क्रियानयसाध्यं तत्वप्राग्भावे च सर्वं ज्ञाननयसाध्यं अस्ति । वस्तुतः ज्ञानप्रवृत्तिरेव चरणं ज्ञानमयसेवात्मधर्मत्वात् अतः ज्ञानस्वरूप एवात्मा ॥ ३ ॥

**यतः प्रवृत्तिर्न मणौ, लभ्यते वा न तत्फलम् । अतात्विकी मणिज्ञप्ति–र्मणिश्रद्धा च सा यथा ॥ ४ ॥**

व्या० यतः प्रवृत्तिरिति—अशुद्धज्ञाने निष्फलत्वं द्ढयति यथा अतात्विकी मणिज्ञप्तिः अमणौ मण्यारोपे मणौ मणिश्रद्धा तस्मिन् तत्फलं न लभते न प्राप्यते यतः मणेः सकाशात् मणिप्रवृत्तिः विषापहारादिका न भवतीत्यर्थः । उक्तं च ।

पुल्लेव मुद्धी जह से असारे आयंतए कूडकहावणे वा । राढा मणि वेरुलवप्पगासे अमहग्घउं होइ जाणएसु (?) ॥ १ ॥

तथा यतो न शुद्धात्म—स्वभावाचरणं भवेत् । फलं दोषनिवृत्तिर्वा, न तद् ज्ञानं न दर्शनम् ॥ ५ ॥

व्या० तथा इति—तथा तेन प्रकारेण यत एकांतद्रव्याचरणचारित्रात् शुद्धात्मस्वभावाचरणं शुद्धः परभावरहितः योऽसौ आत्मस्वभावः स्वरूपलक्षणः तस्याचरणं तदैकत्वं तन्मयत्वं न भवेत् तेन प्रवर्त्तनेन फलं शुद्धात्मस्वभावलाभरूपं न परमात्मपदनिष्पत्तिः न दोषाणां रागादीनां निवृत्तिः अभावः न वा अथवा तत्सर्वमपि प्रवर्त्तनं बाललीलाकल्पं शुद्धत्मस्वरूपालंबनमंतरेण अवेद्यसंवेद्यरूपं ज्ञानं तत् ज्ञानं तथा सकलपरभावसंगोपाधिकाशुद्धात्माध्यवसायमुक्ततात्विकामूर्त्तचिन्मयानंदात्मीयसहजभाव एवाहमिति निर्द्धारविकलं तद्दर्शनं न नैवेत्यर्थः, अतएव श्रुतेन केवलात्मज्ञानं तदभेदज्ञानं उत्सर्गज्ञानं च श्रुताक्षरावलंबि सर्वद्रव्योपयोगं भेदज्ञानं सर्वाक्षरसंपनश्च यावद् द्रव्यशुभावलंबी तावद् भेदज्ञानी । उक्तं च समयप्राभृते—

जो सुएणभिगच्छई अप्पाणमिणं तु केवलं शुद्धं । तं सुअकेवलमिसिणो, भणंति लोगप्पदीवयरा ॥ १ ॥
जो सुअनाणं सबं, जाणई सुअकेवली तमाहु जिणा । नाणं आया सवं जम्हा सुअकेवली तम्हा ॥ २ ॥

आत्मस्वरूपज्ञानं च प्राभृते ।

अहमिको खलु सुद्धो, निम्मओ नाणदंसणसमग्गो । तम्मि तिओ तवित्तो, सबे एए खयं नेमि ॥ १ ॥

निर्मल निष्कलंकज्ञानदर्शनोपयोगलक्षणः आत्मा तद्ज्ञानं ज्ञानं । उक्तं च—

देहादेवलजो वसै, देव अणाइ अणंत । सो परजाणहु जोईया, अन्न न तं तं नमंत ॥ १ ॥

आत्मज्ञानेनैव सिद्धिः साध्यमपि पूर्णात्मज्ञानं तदर्थमेव विवदंति दर्शनांतरीयाः, प्राणामयंति रेचकादिपवनं, अवलंबयंति मौनं, भ्रमंति गिरिवननिकुंजेषु, तथाप्यर्हत्प्रणीतागमश्रवणात् स्याद्वादस्वपरपरीक्षा परीक्षितस्वस्वभावौषधमंतरेण न कार्यसिद्धिः अतः प्राप्तावसरे तदेवानंतगुणपर्यायात्मकमात्मज्ञानमात्मनात्मनि करणीयं । उक्तंच—

आत्मज्ञानभवं दुःख–मात्मज्ञानेन हन्यते । अभ्यस्यं तत्तथा तेन, येनात्मा ज्ञानमयो भवेत् ॥ १ ॥

**यथा शोफस्य पुष्टत्वं, यथा वा वध्यमंडनम् । तथा जानन् भवोन्माद–मात्मतृप्तो मुनिर्भवेत् ॥ ६ ॥**

व्या० यथा इति—यथा येन प्रकारेण शोफस्य पुष्टत्वं शरीरस्थौल्यं न पुष्टत्वे इष्टं, वाऽथवा यथा वध्यस्य मारणार्थं स्थापितस्य मंडनं कणवीरमालाद्यारोपणात्मकं एवं रूपं भवोद्रूमादं जानन् भवस्वरूपं एवंविधं जानन् मुनिः समस्तपरभावत्यागी आत्मतृप्तः आत्मस्वरूपे अनंतगुणात्मके तृप्तः तुष्टः भवेत् संसारस्वरूपमसारनिष्फलं अभोग्यं तु तद् ज्ञात्वा मुनिः स्वरूपे मग्नः भवति ॥ ६ ॥

**सुलभं वागनुच्चारं, मौनमेकेंद्रियेष्वपि । पुद्गलेष्वप्रवृत्तिस्तु, योगानां मौनमुत्तमम् ॥ ७ ॥**

व्या०सुलभमिति—वागनुच्चारं वचनाप्रलापरूपं मौनं सुलभं सुप्राप्यं तत् एकेंद्रियेष्वपि अस्ति तन्मौनं मोक्षसाधकं नास्ति पुद्गलेषु पुद्गलस्कंधजवर्णगंधरसस्पर्शसंस्थानादिषु योगानां द्रव्यभावमनोवचनकाययोगानां या अप्रवृत्तिः रम्या रम्यतया अव्यापकत्वं तदभिमुखं वीर्यापसरणपरिसर्पणरहितं मौनं उत्तमं प्रशस्यं । भावना च परभावानुगचेतनावीर्यप्रवर्त्तनं चापल्यं तद्रोधः मौनं उत्तमं उत्कृष्टं आयत्यात्मनीनं योगचापल्यं च नात्मकार्यं तेन तद्रोधः श्रेयान् योगस्वरूपं कर्म-

प्रकृतौ आत्मनः वीर्यगुणस्य क्षायोपशमप्राप्तस्यासंख्येयानि स्थानानि सर्वजघन्यं प्रथमं योगस्थानं सूक्ष्मनिगोदिनः एवं सूक्ष्मनिगोदेषु उत्पद्यमानस्य जंतोः भवति । इह जीवस्य वीर्यं केवलिप्रज्ञाच्छेदकेन छिद्यमानं छिद्यमानं यदा विभागं न प्रयच्छति तदा स एवांशो विभागः तेच वीर्यस्याविभागाः एकैकस्मिन् जीवप्रदेशे चिंत्यमाना जघन्येनाप्यसंख्येयलोकाकाश-प्रदेशप्रमाणाः उत्कर्षतोऽप्येतत्संख्या किंतु जघन्यपदभाविवीर्याविभागापेक्षया असंख्येय गुणा द्रष्टव्याः, येषां जीवप्रदेशानां समाः तुल्यसंख्यया वीर्याविभागा भवंति । सर्वेभ्योऽपि चान्येभ्योऽपि जीवप्रदेशगतवीर्याविभागेभ्यः स्तोकतमाः ते जीवप्रदेशाः घनीकृतलोकासंख्येयभागासंख्येयप्रतरगतप्रदेशराशिप्रमाणाः समुदिता एका वर्गणा, साच जघन्या स्तोका-विभागयुक्तत्वात् जघन्यवर्गणातः परे जीवप्रदेशाः एकेन वीर्याविभागेनाभ्यधिका घनीकृतलोकासंख्येयभागवर्त्यसंख्येय प्रतरगतप्रदेशराशिप्रमाणा वर्त्तंते तेषां समुदायो द्वितीया वर्गणा, ततः परं द्वाभ्यां वीर्याविभागाभ्यामधिकानामुक्तसं-ख्याकानामेव जीवप्रदेशानामेव समुदायस्तृतीया वर्गणा, एवमेकैकवीर्याविभागवृध्या वर्द्धमानानां तावंतो जीवप्रदेशानां समुदायरूपा वर्गणा असंख्येया वक्तव्याः, ताश्च कियत्य इति, इदं घनीकृतलोकस्य या एकैकप्रदेशपंक्तिरूपा श्रेणिः तस्याः श्रेणेरसंख्येयतमे भागे यावंतः आकाशप्रदेशाः तावन्मात्रा वर्गणा समुदिता एकस्पर्द्धकं "स्पर्धंते इवोत्तरोत्तरवृद्ध्या वर्गणा अत्रेति स्पर्द्धकं" पूर्वोक्तस्पर्द्धकगतचरमवर्गणायाः परतो जीवप्रदेशानेकेन वीर्याविभागेनाधिकाः प्राप्यंते नाऽपि द्वाभ्यां नाऽपि त्रिभिः नाऽपि सख्येयैः, किंत्वसंख्येयलोकाकाशप्रमाणैरभ्यधिकाः प्राप्यंते, ततस्तेषां समुदायो द्वितीयस्य स्पर्द्ध-कस्य प्रथमा वर्गणा ततः जीवप्रदेशानामेकेन वीर्याविभागेनाधिकानां समुदायो द्वितीया वर्गणा, द्वाभ्यां वीर्याविभागाभ्यां

अधिकानां समुदायः तृतीया वर्गणा, एवं तावद्वाच्यं यावत् श्रेण्यसंख्येयभागगतप्रदेशराशिप्रमाणा वर्गणा भवंति, तासां च समुदायः द्वितीयं स्पर्द्धकं, ततः पुनरप्यसंख्येयलोकाकाशाः प्रदेशप्रमाणैः वीर्याविभागैरभ्यधिकाः प्राप्यंते, ततस्तेषां समुदायाः तृतीयस्य स्पर्द्धकस्य प्रथमा वर्गणा, ततः एकैकवीर्याविभागवृद्ध्याद्वितीयादयो वर्गणास्तावद्वाच्यं यावत् श्रेण्यसंख्येयभागगतप्रदेशराशिप्रमाणाः भवंति, तासां च समुदायः तृतीयं स्पर्द्धकं, एवमसंख्येयानि स्पर्द्धकानि वाच्यानि एवं पूर्वोक्तानि स्पर्द्धकानि श्रेण्यसंख्येयभागगतप्रदेशराशिप्रमाणानि जघन्यं योगस्थानं, एतच्च सूक्ष्मनिगोदस्य सर्वाल्पवीर्यस्य भवप्रथमसमये वर्त्तमानस्य प्राप्यते, ततः अस्य जीवस्याधिकतरवीर्यस्य येऽल्पतरवीर्या जीवप्रदेशाः तेषां समुदायः प्रथमा वर्गणा। ततः एकेन वीर्याविभागेन वृद्धानां समुदायो द्वितीया वर्गणा। द्वाभ्यां अधिकानां समुदायस्तृतीया वर्गणा। एवमेकैकवीर्याविभागवर्द्धमानानां यावत् श्रेण्यसंख्येयभागगतप्रदेशराशिप्रमाणा भवंति, तासां समुदायः प्रथमस्पर्द्धकं। ततः प्राक्तनयोगस्थानप्रदर्शितप्रकारेण द्वितीयादीनि स्पर्द्धकानि वाच्यानि, तानि च यावत् श्रेण्यसंख्येयभागगतप्रदेशराशिप्रमाणानि भवंति, ततस्तेषां समुदायो द्वितीयं योगस्थानं। ततोऽन्यस्य जीवस्याधिकतरवीर्यस्योपदर्शितप्रकारेण तृतीयं योगस्थानं वाच्यं। एवमन्योऽन्यजीवापेक्षया तावत् योगस्थानानि वाच्यानि यावत्सर्वोत्कृष्टं योगस्थानं भवति तानि च योगस्थानानि सर्वाण्यपि श्रेण्यसंख्येयभागगतप्रदेशराशिप्रमाणानि भवंति। क्षयोपशमवैचित्र्यात्सर्वमवसेयं। ननु जीवानामनंतत्वात् प्रतिजीवं च योगस्थानस्य प्राप्यमाणत्वात् अनंतानि योगस्थानानि प्राप्नुवंति कथमुच्यते असंख्येयानि। ? उच्यते—यतः एकैकस्मिन् योगस्थाने सदृशे सदृशे वर्त्तमानाः स्थावरजीवा अनंताः प्राप्यंते, ततः सर्वजीवा-

पेक्षयापि सर्वाणि योगस्थानानि केवलपरिज्ञया परिभाव्यमानानि असंख्येयान्येव प्राप्यंते ? नाधिकानि, एकस्मिन् योगस्थाने एको जीवः जघन्यतः एकं समयं उत्कृष्टतः अष्टौ (समयान्) यावत्तिष्ठत्ति । एवं योगस्थानतारतम्ये सर्वजीवेषु बाहुल्यं गाथाक्रमेण वक्तव्यं—

सुहुमनिगोआक्खणप्पजोग बायर विगलअमणमणा । अपज्जलहु पढमदुगुरु पजस्सियरो असंखगुणो ॥

असमत्ततसुक्कोसो पज हन्नियर एव ठिइठाणा ॥ इत्यष्टाविंशतिभेदाल्पबहुत्वं अवगंतव्यं । योगबाहुल्ये बहुकर्मग्राही मंदत्वे अल्पपुद्गलग्राही इत्येवं या योगानां पुद्गलग्रहणरूपा प्रवृत्तिः तस्याः रोधः मौनं उत्तमं, किं सतृष्णस्य बाह्ययोगरोधेन, ? तस्मात् सकलविमलज्ञानाद्यनंतगुणमहामाहात्म्यपरमात्मभावरसिकैः आत्मनः योगप्रवृत्तिपुद्गलानुगतयो रोधनीया इत्युपदेशः ॥ ७ ॥

**ज्योतिर्मयीव दीपस्य, क्रिया सर्वापि चिन्मयी । यस्यानन्यस्वभावस्य, तस्य मौनमनुत्तरम् ॥ ८ ॥**

## ॥ इति मौनाष्टकम् ॥

ज्योतिर्मयीवेति—तस्य—तत्त्वैकत्वपरिणतस्य मौनं योगनिग्रहरूपं स्वधर्मप्राग्भावकर्तृत्वभोक्तृत्वे व्यापारिताशेषवीर्यस्य कर्मविकरणापूर्वकरणकिट्टीकरणादिषु स्थापितवीर्यकरणस्य परभावाप्रवृत्तत्वेन मौनं—योगचापल्यतावारणरूपं अनुत्तरं—सर्वोत्कृष्टं यस्य—क्रियागुणप्रकर्षप्रवर्त्तनावीर्यप्रवृत्तस्यापि चिन्मयी—स्वरूपज्ञानमयी आत्मानुभवैकत्वरूपा, तथा—प्रदीपस्य या क्रिया—उत्क्षेपणादिका या सर्वापि ज्योतिर्मयी—आत्मानुभवैकत्वरूपा, यथा दीपस्य या क्रिया उत्क्षेपणनिक्षेपणादिका या सा

सर्वापि ज्योतिर्मयी ज्ञानप्रकाशयुक्ता, तथा यस्य वंदननमनादिगुणस्थानारोहरूपा क्रिया तत्त्वज्ञानप्रकाशिका तस्य अनन्य-स्वभावस्य—न विद्यते अन्यः—परः स्वभावो यस्य सः तस्य, परभावव्यापकचेतनाभिसंधिवीर्यरहितस्य साधोः मौनं अनुत्तरं, वियत्सुखभावानुरोधादेव तत्कारकात् वियत्संपूर्णता, तदुत्पत्तौ 'कुंभस्येव दशात्मनः' इति न्यायात् ज्ञानिनः क्रिया ज्ञान्युपकारका ज्ञातव्या, ज्ञाननयस्यात्मनः तत्त्वैकत्वाध्यासिनः स्वरूपारोहका या क्रिया सा ज्ञानस्वरूपप्रकाशनहेतुः आचरणनिमित्तमसत्क्रिया आचरणापगमाय सत्क्रियानिमित्तं भवति, तत्त्वमग्नस्य न कारणीभवति, अतः तत्त्वज्ञानस्वरूपैकत्वध्यानलीनानां मुनीनां तेषां एव नमश्चरणयोः ॥ ८ ॥

इति व्याख्यातं मौनाष्टकम् ॥ १३ ॥

## अथ विद्याष्टकम् ॥ १३ ॥

अथेदृग् मौनाष्टकं यथार्थविद्यातत्त्वोपयोगिबुद्धिवमतः भवति, अतः विद्याष्टकमुपदिशति,—तत्र नामविद्या इति नाम जीवस्याभिधानं क्रियते सा नामविद्या, अक्षवराटककाष्ठादि विद्या इति स्थाप्यते सा स्थापनाविद्या, द्रव्यविद्या लौकिका शिल्पादिरूपा, लोकोत्तरा द्विविधा—कुप्रावचनिका भारतरामायणोपनिषद्रूपा लोकोत्तरा सुप्रावचनिका विद्या आवश्यकाचारांगादिलक्षणा, सापि ज्ञशरीरभव्यशरीरस्य तदभ्यासवतः अनुपयुक्तस्य द्रव्यविद्या, अथवाऽनुपयुक्तस्य हेयोपादेयपरीक्षाविकलस्य वाचनापृच्छनापरिवर्त्तनाधर्मकथारूपा, अनुप्रेक्षाविकलापि चेतनाविज्ञप्तिर्द्रव्यरूपा ज्ञेया, भावविद्या तु लोकोत्तरार्हत्प्रणीतागमरहस्याभ्यासवतः नित्यानित्याद्यनंतपर्यायोपेतचिद्रूपोपादेयबुद्धिः विभावाद्यनंतपरभावपरित्याग-

प्रज्ञप्तिलक्षणा, भावविद्याभ्यासस्यावसरः, तत्र मत्यादिज्ञानक्षयोपशमनिमित्ताः इंद्रियादयः नैगमेन विद्या, सर्वजीवद्रव्याणि संग्रहेण, द्रव्यश्रुतं व्यवहारेण, ऋजुसूत्रेण वाचनादि, शब्दनयेन यथार्थोपयोगः, कारणकार्यादिसंकररूपसविकल्पचेतना समभिरूढेन, निर्विकल्पचेतना क्षायोपशमिकी साधनावस्था एवंभूतेन, साधका निर्विकल्पा तात्त्विकी। तथा—केचित् केवलज्ञानरूपसिद्धविद्या इति आद्यनयचतुष्टयस्य द्रव्यनिक्षेपांतर्गतत्वेन कारणरूपा गृहीता, अतः नयत्रयस्य भावरूपत्वेन कार्यरूपा उत्तरोत्तरसूक्ष्मा गृहीता, तत्र कारणोद्यमेन कार्यादरवता भवितव्यं।

**नित्यशुच्यात्मताख्याति–रनित्याशुच्यनात्मसु। अविद्यातत्त्वधीर्विद्या, योगाचार्यैः प्रकीर्तिता ॥ १ ॥**

नित्यशुच्येति—अनित्याशुच्यनात्मसु नित्यशुच्यात्मताख्यातिः अविद्या इत्यन्वयः, अनित्ये चेतनात् जातिभिन्नमूर्त्त-पुद्गलग्रहणोत्पन्ने परसंयोगे या नित्यताख्यातिः सा अविद्या, अशुचिषु शरीरादिषु श्रवन्नवद्वाररंध्रेषु क्रुद्धस्वरूपावतरण-निमित्तेषु शुचिख्यातिः, अनात्मसु पुद्गलादिषु आत्मताख्यातिः 'अहं मन्ये' इति बुद्धिः 'इदं शरीरं मम अहमेवैतत् तस्य पुष्टौ पुष्टः' इति ख्यातिः कथनं ज्ञानं तत्र रमणं इयं अविद्या भ्रांतिबुद्धिः या तत्त्वबुद्धिः, शुद्धात्मनि नित्यता शुचिता आत्मता इति ज्ञप्तिः विद्या—तत्त्वविवेकः। अत्र नित्यत्वं तु उत्पादव्ययध्रुवरूपेऽपि अर्पितानर्पितप्रकारेण द्रव्यास्तिककूट-स्थनित्यता ज्ञेया, इयं विद्या परमार्थसाधनपद्धी योगाचार्यैः योगः—ज्ञानश्रद्धानचरणात्मकमोक्षोपायः तस्य आचार्याः—तदा-चरणकुशलाः तैः प्रकीर्त्तिता। अत्र भेदज्ञानं साधनं। उक्तं च अध्यात्मबिंदौ "यावंतो ध्वस्तबंधा अभूवन् , भेदज्ञाना-भ्यास एवात्र मूलं, यावंतोऽध्वस्तबंधा भ्रमंति, भेदज्ञानाभाव एवात्र बीजं" ॥ १ ॥

**यः पश्येन्नित्यमात्मानमनित्यं परसंगमम् । छलं लब्धुं न शक्नोति, तस्य मोहमलिम्लुचः ॥ २ ॥**

यः पश्येदिति—'यः' आत्मार्थी आत्मानं 'नित्यं' सदा अचलितस्वरूपं 'पश्येत्' अवलोकयेत्, 'परसंगमं' शरीरादिकं 'अनित्यं' अध्रुवं पश्येत् तस्य—साधनोद्यतस्य मोहो—मौढ्यं मुह्यता—मिथ्यात्वादिभ्रांतिरूपा स एव मलिम्लुचः—तस्करः 'छलं' छिद्रं लब्धुं 'न शक्नोति' न समर्थो भवति इति अनेन यथार्थज्ञानवतः रागादयो न प्रवर्द्धंते, तस्यात्मा मोहाधीनः न भवति॥२॥

**तरंगतरलां लक्ष्मीमायुर्वायुवदस्थिरम् । अदभ्रधीरनुध्याये—दभ्रवद्भंगुरं वपुः ॥ ३ ॥**

तरंगेति—'अदभ्रधीः' पुष्टबुद्धिः लक्ष्मीः तरंगवत्—जलधिकल्लोलवत् तरला—चपला तां तरंगतरलां अस्थिरां अनुध्यायेत्, 'आयुः' जीवितं यातित्वं वायुवत् 'अस्थिरं' गत्वरं प्रतिसमयविनश्वरं अध्यवसानादिविघ्नोपयुक्तं 'अनुध्यायेत्' चिंतयेत् 'वपुः' शरीरं पुद्गलस्कंधनिचितं अभ्रवद्भंगुरं—भंगशीलं अनुध्यायेत् ,इदं च यथार्थचिंतनं भावना च, स्वसंपद्विमुक्तेन पृथ्वीकायस्कंधा संपद्रूपेण उपचरिता न च ते संपत् , तथा जीवः ज्ञानदर्शनवीर्यसुखरूपैः भावप्राणैरेव जीवति आयुर्जीवनं तु बाह्यप्राणसंबंधस्थितिहेतुतया तन्नात्मस्वरूपं तथा वर्णगंधरसस्पर्शाचेतनशरीरोपचयश्च न स्वरूपं, तदपि अस्थिरं, इत्येवं अस्थिरपरभावे स्वात्मधर्मप्रध्वंसके कः प्रतिबंधः?, तदर्थं च स्वगुणान् चेतनावीर्यादीन् कः परभावग्रहणोन्मुखान् करोति अतः आत्मनि आत्मगुणप्रवृत्तिरेव करणीया ॥ ३ ॥

**शुचीन्यप्यशुचीकर्त्तुं, समर्थेऽशुऽचिसंभवे । देहे जलादिना शौच—भ्रमो मूढस्य दारुणः ॥ ४ ॥**

शुचीनपीति—'मूढस्य' अज्ञस्य यथार्थापरयोगरहितस्य देहेंद्रियायतने 'जलादिना' पानीयमृत्तिकादिसंगेन शौचभ्रम

श्रोत्रियादीनां 'दारुणः' भयकृत् , यश्च जात्याशुचिः स किं जलव्यूहैः शुचीभवति ?, कथंभूते देहे ?—शुचीन्यपि—कर्पूरादीन्यपि 'अशुचीकर्तुं' मलीकर्तुं समर्थे, देहसंगात् मलयजविलेपनादयोऽप्यशुचीभवंति, पुनः कथंभूते देहे ? 'अशुचिसंभवे' अशुचि आर्त्तवं मातुः रक्तं पितुः शुक्रं तेन संभवः उत्पत्तिः यस्य स तस्मिन् । उक्तं च भवभावनायां—

सुक्कं पिउणो माउए सोणियं तदुभयंपि संसट्ठं । तप्पढमाए जीवो आहारइ तत्थ उप्पन्नो ॥ १ ॥

यूकाइसुणयभक्के, किमिकुलवासे य वाहिखित्ते य । देहम्मि अवधुविहुरे सुसाणत्थाणे य पडिबंधो ॥ २ ॥

अतः अस्थिरे अपवित्रे औपाधिके अभिनवबंधकारणे द्रव्याभावाधिकरणे कः संस्कारः ॥ ४ ॥

अथ देहे आत्मत्वारोपोऽपि बहिरात्मदोषौघः अतः तन्निवार्य स्वरूपे आत्मनः पावित्र्यं करणीयं तदुपदिशति—

**यः स्नात्वा समताकुंडे, हित्वा कश्मलजं मलम् । पुनर्न याति मालिन्यं, सोऽन्तरात्मा परः शुचिः ॥ ५ ॥**

यः स्नात्वेति—सः अंतरात्मा देहात् भिन्नात्मज्ञानी स्वपरविवेकी 'परः' प्रकृष्टः 'शुचिः' पवित्रः ज्ञेयः पुरुषः, समता अरक्तद्विष्टता तद्रूपे कुंडे स्नात्वा 'कश्मलजं' पापोत्पन्नं मलं हित्वा पुनः मालिन्यं 'न याति' न प्राप्नोति सम्यक्त्वभावितात्मा परमः शुचिः 'बंधे ण वोलइ कयावि' इति वचनात्, सम्यग्दृष्टिरनेनांशेन स्नातकः न पुनः उत्कृष्टां स्थितिं बध्नाति, एतदेव सहजं पवित्रत्वं ॥ ५ ॥

**आत्मबोधो न वः पाशो, देहगेहधनादिषु । यः क्षिप्तोऽप्यात्मना तेषु, स्वयं बंधाय जायते ॥ ६ ॥**

आत्मा इति—भो भव्याः ? वः युष्माकं आत्मबोधः आत्मज्ञानं न पाशः न बंधहेतुः केषु ? देहगृहधनादिषु यः

आत्मना क्षिप्तः स पाशः रागपरिणामः स्वस्य आत्मन एव बंधाय जायते इत्यनेन देहगृहादिषु यः रक्तः स सर्वभवपाशैः बध्नाति स्वस्य बंधहेतुः इत्यनेन परभावा रागादयः आत्मनः बंधवृद्धिहेतवः ॥ ६ ॥

**मिथो युक्तपदार्थाना–मसंक्रमचमत्क्रिया । चिन्मात्रपरिणामेन, विदुषैवानुभूयते ॥ ७ ॥**

मिथोयुक्त इति—परस्परं युक्तानां मिलितानां पदार्थानां–धर्मादीनामेकक्षेत्रावगाहिनां पुद्गलानां च स्वक्षेत्रपरिणतानां असंक्रमचमत्क्रिया न संक्रमः परस्परं अमीलनरूपः चमत्क्रिया–चमत्कारः, एकक्षेत्रावगाढा अपि न परस्परं व्यापका भवन्ति इत्यनेन स्वरूपतः भिन्ना एव, एषां चमत्क्रिया विदुषा एव अनुभूयते–पंडितेनैव विभज्यते, कथंभूतेन विदुषा ?–'चिन्मात्र-परिणामेन' ज्ञानमात्रपरिणामेन ज्ञानमात्रबलेन इत्यनेन पंचास्तिकायानां एकक्षेत्रस्थितानां कैश्चित्साधारणगुणैः अगुरु, लध्वादिभिः तुल्यानामपि असाधारणगुणैः गतिस्थित्यवगाहचेतनापूरणगलनादिलक्षणैश्च भेद एव, स्वाशुद्धग्राहकतागृहीतपुद्गलेष्वपि न स्वगुणसंक्रमः नाऽपि पुद्गलगुणसंक्रमयावत् एषां भेदचमत्क्रिया भिन्नद्रव्ये स्वद्रव्यगुणपर्यायाणां एकद्रव्यव्याप्यावस्थितानां आधाराधेयत्वेनाभेदरूपाणामपि स्वस्वधर्मपरिणतिरूपा भेदचमत्क्रिया, एवं द्रव्याद्द्रव्यस्य गुणाद्गुणस्य पर्यायात्पर्यायस्य स्वभावस्य भेदलक्षणा चमत्क्रिया विदुषा–पंडितेनैव अनुभूयते, नान्येन द्रव्यानुयोगज्ञानविकलेन । उक्तं च सम्मतौ—

अण्णोण्णाणुगयाणं इमं च तं चत्ति विभणयमजुत्तं । जह दुद्धपाणियाणं जावन्ति विसेस पज्जाया ॥ ४७ ॥

जं दव्वखित्तकाले, एगत्ताणंपि भावधम्माणं । सुअनाणकारणेणं, भेए नाणं तु सा विज्जा ॥ २ ॥

इति । हरिभद्रपूज्यैः द्रव्यानुयोगलीनानां आधाकर्मादिदोपमुख्यत्वं न मतं तथा च भगवत्यंगे—“समणो वा सगस्सणं-भंते ? तहारूवं समणं वा माहणं वा अफासुएणं अणेसणिज्जेणं असणपाणखाइमसाइमेणं पडिलाभमाणे किं कज्जई ?, गोयमा ! बहुतरा से निज्जरा कज्जई, अप्पतरे से पावे कम्मे कज्जई”। तद्वृत्तिः इह च केचित् मन्यंते–असंस्तरणादिकारणे एवाप्रासुकादिदाने बहुतरनिर्जरा भवति नाकारणं, यत उक्तं—

संथरणंम्मि असुद्धं दोण्हवि गेण्हंतदिंतयाणहिअं । आउरदिठ्ठंतेणं, तं चेव हियं अ संथरणे ॥ १ ॥

अन्ये त्वाहुः–कारणेऽपि गुणवत्पात्रायाप्रासुकादिदाने परिणामवशात् बहुतरा निर्जरा भवति अल्पतरं च पापं कर्म इति, निर्विशेषत्वात् सूत्रस्य परिणामस्य च प्रामाण्यात् , आह—

परमरहस्समिसीणं समत्तगणिपिडगझरियसाराणं । परिणामिअं पमाणं निच्छयमरलंबमाणाणं ॥ १ ॥

इमे पुनः—

“चरणकरणप्पहाणा, ससमयपरसमयमुक्कवावारा । चरणकरणस्स सारं, निच्छयसुद्धं न याणंति ॥ २ ॥

अहागडाइं भुंजंति, अण्णमण्णे सकम्मुणा उवभित्ते वियाणिज्जा, अणुवलित्तेत्ति वा पुणो, एतेहिं ॥ २ ॥ दोहिं ठाणेहिं ववहारेण विज्जइ । एतेहिं दोहि ठाणेहिं, अणायारं तु जाणए ॥२॥ इतिद्वितीयाः २१ अध्ययने इत्यादि गीतार्थस्याकल्पं कल्पं, एषा लब्धिः तत्व ज्ञानवतां एव ॥ ७ ॥

अविद्यातिमिरध्वंसे, दृशा विद्यांजनस्पृशा । पश्यंति परमात्मान–मात्मन्येव हि योगिनः ॥ ८ ॥

## इति विद्याष्टकं ॥ १४ ॥

अविद्या इति—हि निश्चयेः 'योगिनः' समाधिदशावस्थाप्रवृत्तचक्रयोगिनः 'आत्मनि एव' स्वात्मनि एव 'परमात्मानं' उत्कृष्टनिष्पन्नसिद्धात्मानं 'पश्यंति' आत्मनि परमात्मत्वं निर्धारयंति, कया? 'विद्यांजनस्पृशा दृशा, विद्या तत्वबुद्धिरूपा सा एव अंजनं तस्य स्पृशा दृशा—चक्षुषा, क सति ? अविद्या—अज्ञानं अबोधः अयथार्थोपयोगो वा तदेव तिमिरं तस्य ध्वंसः तस्मिन् इत्यनेन मिथ्यात्वतिमिरध्वंसे जाते सम्यग्दृष्टयः आत्मानं आत्मनि पश्यंति, अत एव अनेकोपयोगेन श्रुताभ्यासेन आत्म-स्वरूपोपलंभाय तत्त्वपरीक्षणाय यतितव्यं, यथार्थं आत्मस्वरूपपरिज्ञानं विद्या परमोपकारिणी इति ज्ञेयं ॥ ८ ॥

इति विद्याष्टकम् ।

## अथ विवेकाष्टकम् ॥ १५ ॥

सा च तत्त्वविद्या विवेकेन—स्वपरविभजनेन स्फुटीभवति, अतः विवेकस्याभ्यासः कर्त्तव्यः, तत्र विवेचनं हेयोपादेयपरीक्षणं विवेकः, नामस्थापनाविवेकौ सुगमौ, द्रव्यविवेकः लौकिकः धनोपार्जनराजनीतिकुलनीतिदक्षस्य भवति, लोकोत्तरस्तु धर्म-नीतिदक्षस्य भवति, भावतो विवेकः बाह्यः स्वजनधनतनुरागविभजनरूपः आभ्यंतरश्च ज्ञानावरणादिद्रव्यकर्माशुद्धचेतनो-त्पन्नविभावितादिभावकर्मैकत्वविभजनरूपः, तत्स्वरूपश्चायं (पंचेदं) आगमे—"पुव्विं रागाइया विभावा सव्वओ विभजिज्जा पच्छा दव्वा कम्मा सव्वविभिन्नो नियो अप्पा ॥१॥" तथा च प्राभृते—'समस्तकाचशकलव्यूहपतितं रत्नं परीक्षकः गृह्णाति

एवं सम्यग्दृष्टिः सर्वविभावपरभावपरिणतमध्यस्थं आत्मानमचलमखंडमव्ययं ज्ञानानंदमयं स्वत्वेन विभज्य उपादत्ते' । श्रीहरिभद्रपूज्यैश्च प्रथमं क्षुद्रादिदोपोपशमे मार्गानुसारिगुणैः तत्त्वजिज्ञासा तत्त्वज्ञगुरुसेवनतः अतिमधुरत्वेन श्रुतरसिकः यथार्थजीवाजीवविवेचनतः सर्वपरभावभिन्नमात्मानमुपलभ्य भेदज्ञानी भवति, स च क्रमेणात्मनः परं त्यजन् सर्वपरभावत्यागी सिद्ध्यति, तत्राद्यनयत्रयेण लौकिकलोकोत्तरविवेकः ऋजुसूत्रनयेन धर्मसाधनविवेकः शब्दादिनयत्रयेण विभावविभजनक्षयोपशमसाधनोपयोगादिक्षायिकसाधकपरिणतिविवेकः इति यथाक्रममवगंतव्यं । तत्रात्मनः कर्मसंयोगैकत्वं विवेचयन्नाहः—

कर्म जीवं च संश्लिष्टं, सर्वदा क्षीरनीरवत् । विभिन्नीकुरुते योऽसौ, मुनिहंसो विवेकवान् ॥ १ ॥

कर्म जीवं च इति—कर्म ज्ञानावरणादिकं जीवं च सच्चिदानंदरूपं 'सर्वदा' सर्वकालं क्षीरं—पयः नीरं—जलं तद्वत 'संश्लिष्टं' एकीभूतं यः 'विभिन्नीकुरुते' लक्षणादिभेदैः पृथक् पृथक् कुरुते असौ मुनिहंसः 'विवेकवान्' भेदज्ञानवान् जीवो नित्यः पुद्गलसंगाः अनित्याः जीवः अमूर्त्तः पुद्गला मूर्त्ताः जीवोऽचलः पुद्गलाः चलाः जीवः ज्ञानाद्यनंतचेतनालक्षणः पुद्गला अचेतनाः जीवः स्वरूपकर्ता स्वरूपभोक्ता स्वरूपरमणाभावविश्रांतः पुद्गलाः कर्तृत्वादिभावरहिताः इत्यादिलक्षणैः विभज्य यः विरक्तः स मुनिः श्रमणः विवेकवान् विवेकयुक्त इति ज्ञेयं ॥ १ ॥

देहात्माद्यविवेकोऽयं, सर्वदा सुलभो भवे । भवकोट्यापि तद्भेद—विवेकस्त्वतिदुर्लभः ॥ २ ॥

देहात्मा इति—आत्मा त्रिविधः—बाह्यात्मा १ अंतरात्मा २ परमात्मा ३ चेति, यस्य देहमनोवचनादिषु आत्मत्वभा-

स देह एवात्मा एवं सर्वपौद्गलिकप्रवर्त्तनेषु आत्मनिष्ठेषु आत्मत्वबुद्धिः स बाह्यात्मा १ मिथ्यादृष्टिः एषः, पुनः सकर्माव-स्थायामपि आत्मनि ज्ञानाद्युपयोगलक्षणे शुद्धचैतन्यलक्षणे महानंदस्वरूपे निर्विकारामृताव्याबाधारूपे, समस्तपरभावमुक्ते आत्मबुद्धिः अंतरात्मा सम्यग्दृष्टिगुणस्थानकतः क्षीणमोहं यावत् अंतरात्मा उच्यते २, यः केवलज्ञानदर्शनोपयुक्तः शुद्ध-सिद्धः स परमात्मा सयोगी केवली सिद्धश्च सः परमात्मा उच्यते । सर्वत्र परमात्मत्वसत्तासमाना, अतः भेदज्ञानेन सर्वं साध्यं इति । देहात्मा देहः-शरीरं आत्मा-जीवः आदिशब्दात् मनोवाक्कायादिषु आत्मा अयं इत्यविवेकः 'सर्वदा' सर्वकालं 'सुलभः' सुप्रापः 'भवे' संसारे, तद्भेदविवेकः—तस्य शरीरात्मना भेदविवेकः—भिन्नताविवेचनरूपः भवकोट्यापि 'अतिदुर्लभः' दुष्प्रापः अनादिकालैकस्वगृहीतपरभावात्मना स्वस्वलक्षणभेदेन भेदज्ञानं—अतिदुर्लभः, सम्यग्दृष्टिरेव भेदज्ञानं करोति आत्मना तन्निश्चयः दुर्लभः । उक्तं च समयप्राभृते—

सुदपरिचिदाणुभूता, सव्वस्सवि कामभोगबंधकहा । एगत्तसुचलभोणवरिणसुलभो विभत्तस्स ॥ १ ॥

आत्मा ज्ञानानंदमयः परभावा रागादयः तेषां विभजनरूपः आत्मस्वरूपरसिकत्वोपयोगः दुर्लभः ॥ २ ॥

**शुद्धोऽपि व्योम्नि तिमिरा–द्रेखाभिर्मिश्रता यथा । विकारैर्मिश्रता भाति, तथात्मन्यविवेकतः ॥ ३ ॥**

शुद्धे इति—'यथा' येन प्रकारेण शुद्धे 'व्योम्नि' आकाशे 'तिमिरात्' चक्षुषि भ्रमकारकतिमिररोगात् रेखाभिर्नीलपी-तादिभिः मिश्रिता शबलता कर्बुरता दृश्यते तथा तेनेव प्रकारेण अविवेकतः असदुपयोगतः विकारैः रागाद्यशुद्धाध्यव-

सायैः 'मिश्रता' एकता 'भाति' शोभते इति, अनादिविकारविक्रियापरिणतः दृश्यते इत्यनेन निश्चयनयेन निर्विकाराखंडचिन्मूर्त्तिः तथापि परैकत्वेन विकारांकितः भासते इति ॥ ३ ॥

आत्मनः परभावकर्तृत्वाभावे परोपाधिजननशुद्धेऽपि व्योम्नि तिमिरात् रेखाभिर्मिश्रता यथा विकारैः, अन्येन विकारेण विकारता कथमिति निवारयन् आह—

**यथा योधैः कृतं युद्धं स्वामिन्येवोपचर्यते । शुद्धात्मन्यविवेकेन, कर्मस्कंधोर्जितं तथा ॥ ४ ॥**

यथा योधैरिति—यथा 'योधैः' सुभटैः कृतं युद्धं समरस्वामिनि नृपे उपचर्यते जयपराजयहर्षविषादश्लोकाश्लोकादिकं स्वामिनि एव ' अयं नृपः जितः अयं पराजितः' लोके इत्युक्तिर्भवति तच्च स्वामित्वांशं ममत्वैकत्वेन तथा संग्रहेण शुद्धे आत्मनि 'अविवेकेन' अज्ञानेन असंयमेन कर्म ज्ञानावरणादि तस्य स्कंधः—समूहः तस्य ऊर्जितं—साम्राज्यं अस्ति इत्यनेन स्वस्वरूपकर्तृत्वभोक्तृत्वपरावृत्तौ ग्राहकतादिशक्तिपरिग्रहणेन तदकर्तृत्वापत्तिर्जीवस्योपचर्यते—उपचारः क्रियते, असदारोप उपचारः परभावकर्तृत्वादिपरिणत्यभावेष्वौपाधिककर्तृत्वाद्युपचारोऽनादीनः इति ॥ ४ ॥

पुनस्तदेव कथयति परप्रसंगाच्चैतन्यव्यामोहं दर्शयति—

**इष्टकाद्यपि हि स्वर्णं, पीतोन्मत्तो यथेक्षते । आत्माभेदभ्रमस्तद्व—देहादावविवेकिनः ॥ ५ ॥**

इष्टकाद्यपि इति—कश्चित् पीतोन्मत्तः पीतेन—कनकेन पंक्तिरथन्यायेनार्थः धत्तूरकेणोन्मत्तः—घूर्मितः 'इष्टकाद्यपि मृन्मयस्कंधानपि हीति निश्चितं स्वर्णं 'ईक्षते' विलोकते तद्वत् 'अविवेकिनः, तत्वज्ञानविकलस्य 'देहादौ' शरीरादौ 'आत्मा-

भेदभ्रमः' आत्मना—चेतनेन सह न भेदः—अभेदः तस्य भ्रमः भवति । शुद्धागमाश्रवणादज्ञातस्वपरविभेदः परं स्वात्मत्वेन जानन् आत्मानं परेणैकत्वं मन्यमानः भ्रमत्यनंतकालं, अतः अयमविवेकस्त्याज्यः ॥ ५ ॥

पुनः शुद्धताहेतुत्वोपदेशं कथयति ।

**इच्छन्न परमान् भावान्, विवेकाद्रेः पतत्यधः । परमं भावमन्विष्यन्, अविवेके निमज्जति ॥ ५ ॥**

इच्छन्न परमानिति—परमान् भावान् परमभावग्राहकनयेन संमतशुद्धचैतन्यानुगसर्वधर्मपरिणमनेन 'परमान्' उत्सर्गशुद्धनयोपदिष्टान् नित्यानित्याद्यनंतान् 'न इच्छन्' न वांछन् 'विवेकाद्रेः' तत्त्वज्ञानतत्त्वरमणगिरेः शृंगात् अधः पतति विवेकरहितो भवति, 'परमं' शुद्धं तादात्मतागतं सर्वविशुद्धात्मस्वभावं स्याद्वादोपयोगेन 'अन्विष्यन्' गवेषयन् शुद्धचैतन्यमुपादेयतया कुर्वन् 'अविवेके' अज्ञाने असंयमे 'न मज्जति' न मग्नः भवति। अध्यात्मस्वरूपैकत्वानुभवकरणप्रवृत्तः परभावचूरणचक्रवर्त्ती एव इति समस्तपरभावोन्मादमंथनपटुशुद्धात्मज्ञानरमणानुभवने यतितव्यं, नार्वाचीनपरिणतौ, अत एक ( एवा ) पूर्वकरणप्रविष्टमुनिरनेकर्द्धिलाभे न संगतिमंगति । अपूर्वकरणं च सर्वाभिनवगुणप्राप्तौ भवत्येव ।

संमदरसजोवविरई, अणविसंजोयदंसख वगे य । मोहसमसंतखवगेखीणसयोगीयर गुणसेढी ॥ १ ॥

एवं एकादशगुणश्रेणिषु प्रथमगुणश्रेणौ करणत्रयं शेषासु दशसंख्यासु अपूर्वकरणानिवृत्तरूपं करणद्वयं करोत्येव एवं अपूर्वापूर्वकरणारोहणेन कर्मपटलविगमो भवति । उक्तं च—

सातर्द्धिरसेष्वगुरुः, प्राप्यर्द्धिविभूतिमसुलभामन्यैः । सक्तः प्रशमरतिसुखे न भजति तस्यां मुनिः संगम् ॥ १ ॥

या सर्वसुखर्द्धिविस्मयनीयानगरर्द्धिर्नार्थयति । सहस्रभागं कोटिशतसहस्रगुणितापि ॥ २ ॥ ॥ ६ ॥

**आत्मन्येवात्मनः कुर्यात्, यः षट्कारकसंगतिम्। काविवेकज्वरस्यास्य, वैषम्यं जडमज्जनात् ॥ ७ ॥**

व्या० आत्मन्येवात्मन इति—यः आत्मनः कर्तृत्वव्यापारविभजनदक्षः आत्मनि एके स्वात्मद्रव्ये एव आत्मनः स्वीया षट्कारकसंगतिः षट्कारकाणां कर्तृकर्मकरणसंप्रदानापादानाधिकरणरूपाणां संगतिं एकत्वं कुर्यात् अस्य पुरुषस्य अविवेकोऽज्ञानं स एव ज्वरः तस्य वैपम्यं विषमत्वं क्व कथं भवति ? ज्वरस्य हेतुत्वमाह जडमज्जनात् 'जडिमजवात्' इति पाठे जडिमा मौढ्यं तस्य जवो वेगः तस्मात् , अथवा जलमज्जनात् जलमज्जनेन महाज्वरोत्पातः तस्मात् । अत्र षट्कारकव्याख्याश्रीविशेषावश्यकानुसारेण उच्यते । आत्मा कर्ता तथा च यः कर्तात्मापरः स कारकचक्रोपेतः आत्मा कर्ता स्वगुणपरिणमनात्मकज्ञप्तिक्रियाकारकत्वात् ज्ञानाद्यनंतगुणप्रवृत्तिः कार्यं गुणाः कारणभूताः गुणपर्यायाणां उत्पादपर्यायाणां पात्रत्वात् संप्रदानं व्ययीभूतपर्यायाणां विश्लेषास्पदत्वात् अपादानं तथानंतगुणपर्यायाणां आधारत्वात् आधारः आत्मनि आत्मा आत्मानं आत्मना आत्मने आत्मनः परिणमनवृत्त्या करोति । उक्तं च श्रीजिनभद्रपूज्यैः—

कारणमहवा छद्धा कत्ता सतंतोत्ति कारणं कत्ता । कज्जं पसाहगतमं, करणंमि उ पिंडदंडाई ॥ १ ॥

व्याख्या—अथवा कारणं षोढा तत्र स्वतंत्रकर्त्ताः यः स्वतंत्रं स्वाधीनं कारणं स कर्ता यथा घटस्य कर्ता कुंभकारः, तथा आत्मनि व्याप्यावस्थितानामभेदरूपाणां गुणानां स्वस्वपरिणमनकार्यव्यापारप्रवृत्तिरूपां क्रियां करोति तेनात्मा कर्ता १ कार्यं प्रसाधकतमं कारणं करणं उपादाननिमित्तभेदात् द्विभेदं तत्र घटे मृत्पिंडं उपादानं दंडादि निमित्तं तथा

चात्मा ज्ञानादिकार्यं तत्र स्वसत्तापरिणतिः उपादानं स्वरूपशुद्धौ शुद्धपारिणामिककार्ये निमित्ताभावः इति कर्मक्षपण-शुद्धात्मप्राग्भावलक्षणे साधनकार्येप्यात्मा कर्ता तत्वसिद्धिः कार्यं आत्मगुणाज्ञानदर्शनचारित्रवीर्यरूपाः स्वधर्मसाधनावलंबिनः कारणं उपादानं निर्विकारवीतरागवाक्यादयः निमित्तं इति—

कम्मं किरियाकरणं, मिहनिविट्ठो जह न सा होई । अहवा कम्मं कुंभो, सकारणं बुद्धिहेउत्ति ॥ १ ॥
भव्वोत्तिवजोगोत्तिव, सक्कातिवसोसरूवलाभस्स । करणं सन्निब्भंमि, विजन्नागासत्थमारंभो ॥ २ ॥
वज्झं निमित्ताविरकं, कज्जं चिय कज्जमाणकालंमि । होइ सकारणमिहरा, विवज्जया भावयाहोज्जा ॥ ३ ॥

क्रियते कर्ता निर्वृत्यते इति व्युत्पत्तेः कर्म भण्यते कासौ क्रिया? कुंभंप्रति कर्तृव्यापाररूपा सा च कुंभलक्षणकार्यस्य कारणमिति प्रतीतमेव । आह—ननु कुलाल एव कुंभं कुर्वन्नुपलभ्यते क्रिया तु न काचित् कुंभकरणे व्याप्रियमाणा दृश्यते इत्याह—इह निश्चेष्टः कुलालोऽपि यस्मान्न प्रसाधयति निष्पादयति या तस्य चेष्टा सा क्रिया इति कथं न तस्यां कुंभकारणत्वमिति । अथवा—कर्तुः ईप्सिततमत्वात् क्रियमाणः कुंभ एव कर्म, तर्हि कार्यमेवेदमतः कथमस्य कारणत्वं ? नहि सुतीक्ष्णमपि सूच्यग्रमात्मानमेव विध्यति ततः कार्यनिवर्त्यस्यात्मन एव कारणमित्यनुपपन्नमेवेत्याह सकारणां स कुंभः कारणं हेतुः कुंभस्य कुतः प्रस्तावात् कुंभबुद्धिहेतुत्वादिदमुक्तं भवति सर्वोऽपि बुद्धौ संकल्पः कुंभादिकार्यं करोति, इति व्यवहारः ततो बुद्ध्यध्यवसितस्य कुंभस्य चिकीर्षतो मृन्मयकुंभः तद् बुद्ध्यावलंबनतया कारणं भवत्येव न च वक्त-व्यमखिन्नत्वादसत्तन्नासौ तद्बुद्धेरपि कथमालंवनं स्यात् द्रव्यरूपतया तस्य सर्वदासत्वादिति । ननु य एवेह मृन्मयकार्य-

रूपो घटः तस्यैव कारणं चिंत्यते इति प्रस्तुतं बुद्ध्यवसितस्तु तस्मादन्य एवेति तत्कारणाभिधानमप्रस्तुतमेव सत्यं भाविनि भूतवदुपचारन्यायेन तयोरेकत्वाध्यवसानाददोषः स्थासकोशादिकारणकालेऽपि हि किं करोषीति पृष्टः कुंभकारः "कुंभंकरोमी" त्येवं वदति बुद्ध्यवसितेन निष्पन्नस्यैकत्वाध्यवसायादिति । अथवा—भव्यो योग्यः स्वरूपलाभस्येति शक्य उत्पादयितुमतः सुकरत्वात्कार्यमप्यात्मनः कारणमिष्यते अवश्यं च कर्मणः कारणत्वमिष्टव्यं यतः तस्मात् समस्तकारणसंनिधानेऽपि नैव कोशार्थप्रारंभः किंतु विवक्षितः कार्यार्थमतस्तदविनाभावित्वात् तत्क्रियायाः कार्यमप्यात्मनः कारणमिति । एतदेव भावयति बाह्यानि कुलालचक्रचीवरादीनि यानि निमित्तानि तदपेक्षक्रियमाणकालेंतरंगबुद्ध्यालोचितं कार्यं भवति, स्वस्यात्मनः कारणं स्वकारणं नान्यथा, यदि बुद्ध्या पूर्वसंपर्यालोचितमेव कुर्यात् तदा प्रेक्षापूर्वं शून्यमनस्कारभावपर्यायो भवेत् घटकारणसंनिधावप्यन्यत् किमपि शरावादि कार्यं भवेदभावो वा भवेन्न किंचित्कार्यं भवेदित्यर्थः । तस्माद्बुद्ध्यवसितं कार्यमप्यात्मनः कारणमेवेष्टव्यं किं बहुना यत्र यत्र यथा यथा युक्तितो घटते तथा तथा सुधिया कर्मणः कारणत्वं वाच्यं अन्यथा कर्मणः कारकत्वे करोतीति कारकमिति षण्णां कारकत्वानुपपत्तिरेव स्यादिति ।

देउं सज्जस्सतं संपयाणमियतं पि कारणं तस्स । होई तदत्थिता तु कीरए तं विणां जं सो ॥ १ ॥

स अभिनवपर्यायः यस्य देयः स तं प्रति संप्रदानं तदपि तस्य कारणं यद्वस्तु तदस्तित्वैतदरूपत्वे भवति न अभिनवपर्यायग्रहणं तर्हि न कार्योत्पत्तिः इदमुक्तं भवति—अभिनवपर्यायग्रहणेनैव कार्यसिद्धिः ।

भूपिंडावायाओ, पिंडो वा सक्करादवायाउ । चक्कमहवा वोया दाणं कारणं तं पि ॥ १ ॥

भूपिंडस्य अपायः शर्करादीनामपायः चक्रादीनां उपपत्तौ एवमपादानं कारकं कारणं भवति, भूरपादानं पिंडापायेऽपि ध्रुवत्वात्, अथवा विवजया पिंडः अपादानं तद्गतशर्करादीनामपायोऽपि विवेकेऽपि ध्रुवत्वात् पृथ्वी घटापाया चक्रमाया कोवापादानमिति ।

वसुहा संचक्कमरूव मिच्चाई संनिहाणं जं । कुंभस्स तंपि कारणमभावओ तस्स जह सिद्धी ॥ २ ॥

घटस्य चक्रं संनिधानमाधारः, तस्यापि वसुधा, तस्या अप्याकाशमस्य पुनः स्वप्रतिष्ठत्वात् स्वरूपमाधारः, इत्येवमादि यत्किमपि आनंतर्येण परंपरया वा संनिधानमाधारो घटस्य विवक्ष्यते तत्सर्वमपि तस्य कारणं तदभावस्य घटस्य यद्य-स्मादसिद्धिः, एवमात्मनोऽपि यथा आत्मा कर्ता स्वगुणानां स्वस्वज्ञप्तिदृष्टिरमणानुभवलक्षणानां प्रवृत्तिः कार्यं ते एव गुणाः सत्तास्थानिरावरणाकरणरूपाः तेषामेवोत्पादपरिणतिपर्या याभिनवाविर्भावलक्षणः संप्रदानः तेषामेव पर्यायाणां ज्ञानादीनां पूर्वपर्यायव्ययलक्षणः अपादानः आत्मनः असंख्येयप्रदेशरूपस्वक्षेत्रत्वं समस्तगुणपर्यायाणामाधारः इति स्वस्वरूपषट्कारकाणां सर्वकार्यनिष्पत्तिः परिणतानां ज्ञानं सद्विवेकस्तद्विवेकता सर्ववैषम्याभावः इति श्लोकार्थः । अत्रा-वसरायातमुच्यते, कारकता तु आत्मपरिणतिकर्तृत्वरूपात्मशक्तिपरिणामः स च सदैव निरावरणोऽपि बंधकार्यकर्तृत्वेन कर्मरूपस्य कर्ता एव सम्यग् ज्ञानोपयोगगृहीतस्वरूपनाभाभिलाषी स्वगुणप्राग्भावस्वरूपस्वसाधनकार्यकर्ता स एव निष्पन्न पूर्णानंदसिद्धत्वे स्वरूपगुणपरिणमनज्ञायकतादिमूलकार्यकर्ता इति ज्ञेयं ॥ ७ ॥

**संयमास्त्रं विवेकेन, शाणेनोत्तेजितं मुनेः । धृतिधारोल्वणं कर्म, शत्रुच्छेदक्षमं भवेत् ॥ ८ ॥**

## इति विवेकाष्टकम् ॥ १५ ॥

संयमास्त्रं इति संयमः परभावनिवृत्तिरूपः तदेव अस्त्रं विवेकेन स्वपरविवेचनेन शाणेन 'शराणें' इति भाषा उत्तेजितं उत्कृष्टतेजस्वितां नीतं धृतिः संतोषः तद्रूपा धारा तया उल्वणं तीक्ष्णं संयमास्त्रं ज्ञानावरणादि तदेव शत्रुः तस्य छेदः तस्मिन् क्षमं समर्थं भवति इत्यनेन अनादिमिथ्यात्वासंयमाज्ञानाधिष्टः विशिष्टोत्कृष्टारूपस्वधर्मभ्रांत्या परभावैकत्वोत्पन्न विपर्यासकर्तृत्वभोक्तृत्वग्राहकत्वाद्यशुद्धपरिणत्या संगृहीतकर्मोपाधिः तदविपाकप्राप्तशुभाशुभसंयोगभोगेन रागद्वेषपरिणतः संसारे संसरति जीवः स एव त्रिलोकवत्सलार्हदुक्तपरमागमसंयोगपीततत्वरहस्यः स्वपरविवेकेन परभावविभावाभ्यां निर्वृतः शुद्धात्मीयस्वभावरुचिः सर्वाश्रवनिर्वृतः परमात्मसाधको भवति अत एव स्वपरभेदज्ञानरूपविवेकाभ्यासः करणीयः८॥

इति व्याख्यातं विवेकाष्टकं पंचदशमम् ।

## अथ माध्यस्थ्याष्टकम् ॥ १६ ॥

अथ विवेकी रागद्वेषाभाववान् भवति शुभाशुभसंयोगे मध्यस्थः भवति अतः माध्यस्थ्यं निरूपयति। अत्र भावना— धर्मध्यानालंबनरूपा चतुः प्रकारा, मैत्री १ प्रमोदा २ मध्यस्था ३ करुणा ४ एवं च ।

माकार्षीत्कोपि पापानि, माचभूत्कोपि दुःखितः । मुच्यतां जगदप्येषा, मतिर्मैत्री निगद्यते ॥ १ ॥

अपास्ताशेषदोषाणां, वस्तुतत्वावलोकिनाम् । गुणेषु पक्षपातो यः सा प्रमोदः प्रकीर्त्तितः ॥ २ ॥

दीनेष्वार्त्तेषु भीतेषु, याचमानेषु जीवितम् । उपकारपरा बुद्धिः, कारुण्यमभिधीयते ॥ ३ ॥

क्रूरकर्मसु निःशंकं, देवतागुरुनिंदिषु । आत्मशंसिषु योपेक्षा, तन्माध्यस्थ्यमुदीरितम् ॥ ४ ॥

इति भावनालक्षणं योगशास्त्रोक्तं व्यवहारनयेन निश्चयनयेन, सर्वजीवपुद्गलेषु शुभाशुभपरिणतेषु अरक्तद्विष्टतारूपा परिणतिः मध्यस्था सा नामादिभेदतः चतुर्द्धा, तत्र द्रव्यमध्यस्था अनुपयुक्तस्य साध्यसाधनशून्यस्य भावमध्यस्था मुनेः मध्यस्थपरिणतिः आद्यनयचतुष्टये द्रव्यमध्यमा अंत्यनयत्रये भावमध्यमा साधनकाले साधनारूपा वीतरागस्य सर्वान्य-जीवपुद्गलसमूहे न रागः न द्वेषः एषा सिद्धरूपा उत्सर्गैवंभूतरूपा मध्यमा सा प्रतन्यतेः—

**स्थीयतामनुपालंभं, मध्यस्थेनांतरात्मना । कुतर्ककर्करक्षेपैस्त्यज्यतां बालचापलम् ॥ १ ॥**

व्या० स्थीयतामिति—भो उत्तमाः ! बालचापलं बालस्याज्ञस्यैकांताज्ञानरक्तस्य चापल्यं वस्तुस्वरूपानपेक्षिवचनरूपं चापल्यं त्यज्यतां मुच्यतां कैः ? कुतर्काः कुयुक्तयः ते एव कर्करा उपला तेषां क्षेपास्तैः तदा किं कर्त्तव्यमित्याह—मध्यस्थेन रागद्वेषाभावेन अंतरात्मना साधकात्मना साधकत्वे अनुपालंभं स्थीयतां मध्यस्थस्य स्वभावोपघातरूपोपालंभः ॥ १ ॥

**मनोवत्सो युक्तिगवी–मध्यस्थस्यानुधावति । तामाकर्षति पुच्छेन, तुच्छाग्रहमनः कपि. ॥ २ ॥**

व्या० मनोवत्स इति—मध्यस्थस्य मनोवत्सः चित्तमित्यर्थः युक्तिगवीं यथार्थवस्तुस्वरूपविभजनोपपत्तिः युक्तिः सा एव गौः तां युक्तिगवीं अनुधावति अनुगच्छति पक्षपाताभावात् यथार्थोपयोगता एव भवति तां सम्यग्ज्ञानतां गावं तुच्छा-

ग्रहमनः कपिः तुच्छः स्याद्वादोत्सर्गापवादानयनतोपयोगशून्यः मनसः ग्रहः कदाग्रहः तन्मयं मनो यस्य सः कपिः वानरः पुच्छेन आकर्षति गतिस्खलनाय भवति न तादृग् यथार्थयुक्तिः प्रसरति कदाग्रहमनसां पक्षदृष्टिरेव न तत्वदृष्टिरिति ॥ २ ॥

**नयेषु स्वार्थसत्येषु मोघेषु परचालने । समशीलं मनो यस्य, स मध्यस्थो महामुनिः ॥ ३ ॥**

व्या० नयेषु इति—स महामुनिः मध्यस्थ उच्यते, यस्य नयेषु समशीलं नयांतरोक्तवस्तुधर्मेषु तत्प्रवर्त्तनेषु मनः समभावलक्षणं स्वपक्षपातरहितं, कथंभूतेषु नयेषु स्वार्थसत्येषु, स्वस्य अर्थः स्वार्थः, तस्मिन् सत्येषु स्वाभिमतस्थापनकुशलेषु, परचालने परस्थापने मोघेषु निष्फलेषु, परपक्षस्थापनासत्येषुल्यो ? स्वमतस्थापने धीरेषु यः शमः इष्टानिष्टतारहितोपयोगः यथार्थविभजनशीलः स मुनिः मध्यस्थः । नयस्वरूपं गीयते—अनेकधर्मकदंबकोपेतस्य वस्तुनः एकेन धर्मेणोन्नयनमवधारणात्मकं वस्तुनः एकांशपरिच्छेदकं ज्ञानं नयव्यपदेशमास्कंदति नयस्य स्वार्थग्राहकता नित्यमेवेदं अनित्यमेवेदं इत्येकांतज्ञानं एकपक्षस्थापनरूपं मिथ्याज्ञानं सर्वनयस्थापनपरं सर्वस्वभावात्मवस्तुस्वरूपसापेक्षं गौणमुख्यत्वेन अर्पितानर्पितोपयोगं एकांशज्ञानं नयज्ञानं, तदन्यनयोच्छेदरूपं दुर्नव्यपदेशं लभते सर्वसापेक्षतया स्वरूपवृत्तिज्ञानं मुनयः उक्तं च सम्मतौ ।

तह्मा सवेवि नया, मिच्छादिट्ठी सपक्खपडिवद्धा । अण्णोणणिस्सिया पुण, हवंति संमत्तसब्भावा ॥ १ ॥

ते च नयाः सप्त, नैगमः १ संग्रहः २ व्यवहारः ३ ऋजुसूत्रः ४ शब्दः ५ समभिरूढः ६ एवंभूतः ७ एवं एषु चत्वारो

द्रव्यनयाः, त्रयः भावनयाः, इति पूज्याशयः, दिवाकरस्तु—आद्याः त्रयः द्रव्यनया, तथा शेषाः चत्वारः भावनयाः । तत्र निगम्यंते परिच्छिद्यन्ते इति नैगमा लौकिका अर्थाः, तेषु निगमेषु भवोयोऽध्यवसायो ज्ञानं स नैगमः, स च तत्ससामान्यबुद्धिहेतुना सामान्यवचनहेतुना च अत्यंतभेदेभ्योऽन्यत्वरूपेण सत्तामात्रेण सामान्यबुद्धिचेतना अशोकवनादिषु सत्स्वप्यनेकजातिवृक्षेषु वनस्पतिसामान्यात् 'वनं' इत्यवबोधः वचनहेतुता च द्रव्यं, इत्यादिजीवाजीवविभाग-विकल्पः तद्धिविशेषेणापि बुद्धिवचनहेतुतारूपा अत्यंतसामान्यादन्यस्वरूपेण व्यवहरति परमाणुनिष्ठत्वेन तथा सामान्य-विशेषेणापि गवादिना सर्वगोपिंडेष्वनुवृत्त्यात्मकेन व्यवहरति, तथा तेन व्यवहर्त्तव्यमिति लोकश्चोपदिष्टैः प्रकारैः समस्तैः व्यवहरति प्रवचने च विशति, प्रस्थकनिदर्शनद्वयेन विभावितः कणभुजूराद्धांतहेतु स्त्वगंतव्यः, स च अंशकल्पभेदात् द्विविधः, स च सत् असत् योग्यताभूतपूर्वारोपभेदात् अतीतानागतवर्त्तमानतदारोपादिभेदात् अनेकविधः, नामनिक्षे-पतो द्रव्यनिक्षेपवृत्तिः आशोपलंभे सर्वारोपः, अन्यसमस्तसापेक्षः नैगमः सुनयः । अभेदेन वस्तुसामान्येन संग्रहणात् सर्वस्य संगृह्णातीति संग्रहः, वस्तुसत्ताग्राहकः संग्रहः, यदि भावनाभिः संबंद्धस्यैव भावत्वमभ्युपगम्यते ततः परिसमापि-तास्वरूपित्वात् भावस्य भ्रांतिसमुपपत्तिवंधनघटादिविकल्पमानर्थक्यं, यदि घटादिविकल्पोऽपि भवनप्रवृत्तिः तंत्रमेवे-त्येवं सति भाव एव तदनर्थांतरत्वात् तत्स्वात्मवत् एतद्दर्शनपुरःसरा एवं च सर्वनित्यैकत्वाकारणमात्रवादाः कालपुरुष-स्वभावादयश्चेति अत्र द्रव्यास्तिकभेदा जीवाजीवयोग्यत्व स्व द्रव्य उपचारद्रव्य एकत्वाभेदागोचरभेदादनेकभेदः भावनिश्चयसामान्याभेदसंगृहीतानां विधिपूर्वकावस्थादिभेदेन विभजनभेदकरणलक्षणं तद्धर्मप्रवृत्तिभिन्नज्ञानरूपः व्यव-

हारः, यदि घटादिभेदश्रुत्या स्वसामान्यानुबद्धस्य निरस्तसामान्यांतरसंबंधस्य श्रूयमाणत्वानुगुणमेव ग्रहणं न स्यात् किंतु सर्वव्यपदेशविशेषाभिव्यंगाभाव एव तेन तेन रूपेणाभिव्यज्यते । ततो घटादन्यतरभेदश्रुतौ सर्वरूपाभावप्रतीति प्रसंगः, ततश्च घटपटकादिरूपव्यतिकरभावप्रसंगः, उपदेशक्रियोपभोगापवर्गव्यवस्थादीनां चाभावात्सर्वसंव्यवहारोच्छेदः, सर्वविशेषाव्याकरणे च तिर्त्ति बंधनभवनाभावात् भावाभाव एव अविशेषत्वाभेदत्वानिरूप्यत्वादितश्च नैवासौ भावः खरविषाणादिवत् तस्माद्व्यवहारोऽपतितसामान्यो निबंधनं तु यदा द्रव्यं पृथिवी घटादि व्यपदिश्यते तदेव तत्तदा त्रैलोक्याविभिन्नरूपं सततमवस्थितापरित्यक्तात्मसामान्यं महासामान्यप्रतिक्षेपेण संव्यवहारमार्गमास्कंदतीति एवंविध-वस्तूपनिबंधनेनैव च वर्णाश्रमप्रतिनियमयमगम्यागम्यभक्तादिव्यवस्था कुंभकारादेश्च मृदानयनतावमर्दनशिवकस्थास-कादिकरणं प्रवृत्तौ चेतनकादिदानस्य साफल्यं व्यवहार्यत्वाच्च शेपमवस्तुव्योमेंदीवरादिवदिति । ऋजुसममकुटिलं सूत्र-यति ऋजुता श्रुतमागमोऽस्येति सूत्रपातनिबद्धोः ऋजुसूत्रः यस्मादतीतानागतवस्तुपरित्यागेन वर्त्तमानपदवीमनुधावन्यः सांप्रतकालावरुद्धपदार्थत्वात् ऋजुसूत्रः, एष च भावविपयप्रकारातीतानागतवस्तुपरित्यागविषयवचनपरिच्छेदे प्रवृत्तः सर्वविकल्पातीतातिप्रमुग्धसंग्राहाग्रहाविशिष्टत्वात् व्यवहारस्यायथार्थतां मन्यमानः अचरणपुरुषगरुडवेगव्यपदेशवत् वर्त्तमानक्षणसमवस्थितिपरमार्थं व्यवस्थापयति अतीतानागताभ्युपगमस्तु खरविषाणास्तित्वाभ्युपगमान्न भिद्यते, दग्ध-ध्वस्तविषयश्च न कस्यचिदपि स्यात्, अघटादिलक्षणमृदाद्यर्थांतरत्वाच्च घटादिकालेऽपि घटादि नैव स्यात् न च तदेकं मृद्द्रव्यमन्यथा वर्त्तते, किं तर्हि ? अन्यदेवान्यत्प्रत्ययवशात् अन्यथोत्पद्यते इति । न च पिंडादिक्रियाकाले कुंभकार-

व्यपदेशः, यदिचान्यदपि कुर्वन्न तस्य कर्तुरित्युच्यते पटादिकरणप्रवृत्तोऽपि प्रत्याख्यातविज्ञानांतरसंबंधः स्यादेव कुंभ-
कारस्ततश्चाशेपलोकव्यवहारोपरोध इत्यतः पूर्वापरभागवियुतः सर्ववस्तुगतो वर्त्तमानक्षण एव सत्यो नातीतानागतं वा
चास्ति वर्त्तमानवादिनो नास्तिकादयः एतद्दर्शनं च " वरखाद " इत्यादि " नतावानेव लोकोऽयं यावानिंद्रियगोचरः "
इत्यादिसूक्ष्मस्थूलभेदात् परिणतिसामान्यविशेपपरिणति क्षयोपशमिकौदयिकादिवर्त्तमानग्रहरूपशब्दनयः शब्द एवासौ
अर्थकृतवस्तुविपयविशेपाप्रत्याख्यानेन शब्दकृतार्थविशेपं मन्यते यः यः अर्थः धातोः विशेपः स्यान्न शब्दकृतः तेन घट-
वर्त्तमानकाले घट एव निर्विशेपः स्यात् कर्मकरणसंप्रदानापादानस्वाम्यादिविशेपान्नाप्नुयात् ततश्च घटं यत्सत्येवमादिः
कारककृताव्यवहारो विद्यतेऽतः समानालिंगादिशब्दसमुद्भावितमेवाभ्युपैति वस्तुनेतरत् नहि पुरुपः स्थाणुर्यदाख्यात-
वचनार्थहानिः स्यात् भेदार्थं हि वचनं, अतः स्वातितारानक्षत्रमिति लिंगतः निंबाम्रकदंबवनमिति वचनतः स पचति
त्वं पचति अहं पचामि पचावः पचामः इति पुरुपतः एवमादि सर्वं परस्परविशेपं व्याघातादवस्तुपरस्परव्याघातत्वे एव-
मादि अवस्तु प्रतिपत्तव्यं । यथा शिशिरो ज्वलनः तथा विरुद्धविशेषणत्वात् तटः तटी तटमित्यवस्तु रक्तनीलमिति तथा
तथा यद्वस्तु तद्विरुद्धविरुद्धविशेपमभ्युपयंति संतो यथा घटः कुंभः तथाचोच्यते यत्रार्थो न व्यभिचरति अभिधानं
तदेवमयं समानलिंगसंख्यापुरुपवचनं शब्दः एतद्दर्शनानुगृहीतं चोच्यते अर्थप्रवृत्तितत्वानां शब्द एव निबंधनं इति
तत्वार्थे शब्दनयस्त्रिभेदः सांप्रतसमभिरूढैवंभूतभेदात्, सांप्रतं वर्त्तमानं भावाख्यमेव च स्वाश्रयत इति वर्त्तमानक्षण-
वर्त्तिवस्तुविपयोऽध्यवसायः तद्भवः सांप्रतः, स्वार्थे को वा सांप्रतिकः । अनुयोगद्वारादिपु भिन्नाख्यानेन भिन्नैव व्या-

ख्यायते यां यां संज्ञां अभिधत्ते तां तां समभिरोहतीति समभिरूढः, सोऽभिदधाति यदि लिंगमात्रभिन्नवस्तु विसंवादित्वात् नीलतादिवत् एवं सति मूलत एवं भिन्नशब्दं कथं वस्तु स्यात् ? शब्देन हि अर्थानिरुक्तिः क्रियते एतस्मान्निरुक्तादेषः इति यत्र तद्भेदस्तदभिन्नमेव यथा तु पूर्वनयेनैकं कृत्वोच्यते इंद्रशक्रादि तथा तदवस्तुघटज्वसनादिनिमित्तत्वात् अनयोरेकत्वेन अवस्तुता, एवं घटकुटयोरपि चेष्टाकौटिल्यनिमित्तभेदात्पृथक्तौ तथा प्रकृतिप्रत्ययोपात्तनिमित्तभेदात् भिन्नौ शक्रेंद्रशब्दौ एकार्थिनौ न भवतः विविक्तनिमित्तावबद्धत्वात्, गवाश्वशब्दवत् प्रतीतिश्च लोके चैवं निरूढत्वात् इंद्रशब्दस्य पुरंदरादयः पर्यायाः, इत्येतदनुत्पन्नं एवं हि सामान्यविशेषयोरपि पर्यायशब्दत्वं स्यादेव यतः प्लक्षइत्युक्ते प्राक् वृक्षेऽस्ति संप्रत्ययः अस्तित्वे संप्रमोहे च संज्ञांतरकल्पनायामिहापि तर्ह्युक्तादनुक्तप्रतिपत्तौ सत्यां पर्यायत्वप्रसंगः प्रविशं पिंडं भक्षयेत्यस्य गमात् तथास्ति भवतिपरः प्रथमपुरुषे ऽप्रयुज्यमानेऽप्यस्तीति गम्यते, वृक्षः प्लक्षोऽस्ति इति गम्यते न्यायादस्तिपर्यायः प्राप्तः तस्माद्भेदस्यार्थनयात् हस्तिनोऽश्वैकत्वाप्रसंगः इति, एवं संज्ञांतराभिधानमवस्त्वेति एवंभूतनय आह—निमित्तां क्रियां कृत्वा शब्दः प्रवर्त्तते, नहि यदृच्छाशब्दोऽस्ति अतो घटमान एव घटः कूटश्च कूटो भवति, पूर्दारणप्रवृत्त एव पुरंदरः, यथा दंडसंबंधानुभवनप्रवृत्तस्यैव दंडित्वं अन्यथा व्यवहारलोपप्रसंगः न चाऽसौ तदर्थः अनिमित्तत्वात् पुनः नयस्यावयवविभागेन व्याख्यानमाह निश्चयेन्न गम्यंते उच्चार्यंते प्रत्युच्यन्ते येषु शब्दास्ते निगमाः, जनपदाः, तेषु निगमेषु जनपदेषु ये अक्षरात्मकानां ध्वनीनां सामान्यनिर्देशाः अभिहृता उद्धारिताः शब्दाः घटादयः तेषामर्थाः जलधारणादिसमर्थशब्दार्थपरिज्ञानं चेति शब्दस्य घटादिरर्थोऽभिधेयः, तस्य परिज्ञानमवबोधः घट

इत्यनेनायमर्थः उच्यते, अस्य चार्थस्य अयं वाचकः यदेवंविधमध्यवसायांतरं स नैगमः, स सामान्यविशेषालंबादेत-द्दर्शयति—देशसमग्रग्राही यदाहि स्वरूपतो घटोऽयमिति निरूपयति तदा सामान्यघटः सर्वसामान्यव्यक्त्याश्रितं घटा-भिधानप्रत्ययहेतुमाश्रयत्यतः समग्राहीति, तथा विशेषतः सौवर्णो मृन्मयो राजतः श्वेत इत्यादिकं विशेषं निरूपयति ततो देशग्राहीति भण्यते नैगमनयः । सांप्रतं संग्रहस्य अवयवार्थमाह । अर्थानां सामान्यविशेषात्मकयोरेकीभावेन ग्रहणमाश्रयणमेवंविधाध्यवसायः संग्रहो भण्यते, एकीभावेन ग्रहणमेव द्रष्टव्यं, योहि सामान्यविशेषौ नैगमाभिमतौ संपीड्य संग्रहनयः सामान्यमेव केवलं स्थापयति सत्ता स्वभावं यतः सत्तातो न व्यतिरिच्यते विशेषः व्यवहारलक्ष-णाभिधित्सयाह—लौकिकाः विशेषाः तैरेव घटादिभिर्व्यवहरन्ति तेषां उपचारप्रायः इति "उपचारो नामान्यत्र सिद्ध-स्यार्थस्यान्यत्रारोपोदयः" । यथा—कुंडिका श्रवति पंथा गच्छति उदके कुंडिकास्थे स्रवति सति इत्युच्यते । पुरुषे च गच्छति पंथा गच्छति एवमुपचारबहुल इत्यर्थः । विस्तृती विस्तीर्णानेकार्थो यो यस्य सः विस्तृतार्थः अध्यवसायविशेषः व्यवहार इति निगद्यते । ऋजुसूत्रलक्षणं व्याचिख्यासया आह—सतां विद्यमानानां न खलु पुष्पादीनामसतां तेषामपि सतां वर्त्तमानानां अर्थानां अभिधानं शब्दः परिज्ञानं अवबोधी विज्ञानं यावत्संभवति ऋजुसूत्रः, एतदुक्तं भवति—तानेव व्यवहारनयाभिमतान् विशेषानाश्रयन् विद्यमानान् वर्त्तमानान् क्षणवर्त्तिनोऽभ्युपगच्छन् निधानमपि वर्त्तमान-मेवाभ्युपैति, नातीतानागते तेन अनभिधीयमानत्वात् कस्यचिदर्थस्य तथा परिज्ञानं न्यपवर्त्तमानमेवाश्रयति नातीतमा-गामि वा, तत्स्वभावानवधारणात्, अतो वस्त्वभिधानं विज्ञानं चात्मीयं वर्त्तमानमेवेतीत्थं अध्यवसायऋजुसूत्रः इति

यथार्थाभिधानं । शब्दनयः यथेति येन कारणेन भावरूपेण नामस्थापना द्रव्यन्वियुते नार्थो घटादि यथार्थः तस्याभिधानं शब्दः यथार्थाभिधानं तदाश्रयी योऽध्यवसायः शब्दनयः, तथाभिधीयते वर्त्तमानमात्मीयं विद्यमानं भावघटमेवाश्रयति नेतरा इति । अर्थे अभिधेये यः प्रत्ययो विज्ञानं स सांप्रतो नयः, एतदुक्तं भवति—नामादिषु प्रतिविशिष्टवर्त्तमानपर्यायापन्नेष्वपि प्रसिद्धो वाचकः तथा यः शब्दः तस्मात् शब्दात् भावाभिधायिनः तद्वाच्येऽर्थे भावरूपे प्रवृत्तोऽध्यवसायः सांप्रताख्यामासादयति, यतो भाव एव शब्दाभिधेयो भवति, नाशेषाभिलपितः, कार्यकारणादिति । अथाधुना समभिरूढलक्षणं दर्शयन्नाह—विद्यमानेषु वर्त्तमानपर्यायापन्नेषु अर्थेषु घटादिषु असंक्रमः इत्यन्यत्रागमनं शब्दस्य यत्सोऽसंक्रमः यथाघट इत्यस्य शब्दस्य विद्यमानं घटं चेष्टात्मकं विरहय्य अन्यत्र कूटाद्यर्थेऽभिधानसामर्थ्यमस्ति अभिधेयत्वात् यदि चास्य शब्दस्य कूटादिरर्थोऽभिधेयो भवेदेवं सति यथोक्तसर्वसंकटत्वादयो दोषा उपजायंते तन्नित्यतो न शब्दांतराभिधेयोऽर्थोऽन्यस्य शब्दस्याभिधेयो भवति एवमसंक्रमणगवेषणपरोऽध्यवसायः समभिरूढः । एवंभूतस्वरूपमाह व्यंजनं शब्दस्तस्यार्थोऽभिधेयो वाच्यं तयोर्व्यंजनार्थयोरेव संघटनं करोति, घट इति यदिदं अभिधानं तच्चेष्टाप्रवृत्तस्यैव जलधारणाहरणसमर्थस्य वाचकं चेष्टां च जलाद्यानयनरूपां कुर्वाणो घटो मतः, न पुनः क्रियातो निर्वृत्तः, इत्थं यथार्थतां प्रतिपद्यमानोऽध्यवसायः एवंभूतोऽभिधीयते । ननु नया इति कः पदार्थः ? “नयंते प्रदर्श्यंते इति नयाः” सामान्यादिरूपेणार्थं प्रकाशयंति स्वार्थप्रापणेन प्रापकाः कुर्वंति तत्तद्विज्ञानं आत्मन इति कारका अपूर्वं साधयंति, शोभनामन्योन्यव्यावृत्त्यात्मिकां विज्ञप्तिं जनयंति, अतः साधका एव । निवृत्तकोपलंभकादिपर्यायाः तत्वार्थतः ज्ञेयाः ।

अत्र कर्तृक्रिययोः अभेदोऽस्ति, यतः स एव पदार्थः कर्ता इत्येवं व्यपदिश्यते स्वतंत्रत्वात्, तथा स एव च साध्यात्मना वर्त्तमानक्रिया इत्याख्यायते, अतोऽनयोर्नात्यंतको भेदः । अथैते नयाः तंत्रांतरीयाः मतांतरीयाः अथ च स्वतंत्राः सप्त वा जिनवचनविभजनशीलाः पक्षग्राहिणः मतिभेदा वा एवं सर्वत्र मिथ्यात्वादपि प्रतिपत्तिं प्राप्नोति तेन पुनः सूरिराह—इति अत्रोच्यते नैते तंत्रांतरीया नापि स्वतंत्राः किं तर्हि ? तदाह—विज्ञानगमस्य जीवादेः स्वसंवेदस्य वाच्य-स्यार्थस्य घटपटादेरध्यवसायांतराणि विज्ञानभेदाः वस्त्वेवानेकधर्मात्मकानेकाकृतिना ज्ञानेन निरूप्यते, एकवस्तुविषया ज्ञानविशेषाः तेचोदाहरंति । घट इत्युक्ते नैगमः, लोकप्रसिद्धकुंभकारचेष्टानिर्वृत्तः पृथुबुध्नोदराकारः जलघृतक्षीरादीनां आहरणेन देशांतरसंचरणेन समर्थः पाकजादिक्रियानिष्पन्नः द्रव्यविशेषः कनकोपलजादि समग्रसामान्यविशेषव्यक्तिभे-दग्राहकः संकल्पयोग्यतत्सत्तादिदेशग्राहकविज्ञानविशेषेण घटः । एवं जीवोऽपि लोकप्रसिद्धचेतनायोगव्यापारचेष्टानि-र्वृत्तः शरीराकारासंख्येयप्रदेशानेकसंस्थानरूपः आहारविहारक्रियासमर्थः नरनारकामरादिरूपः सन् ज्ञशरीराद्यपर्या-प्तादिसमग्रतः पर्यायादिद्रव्यविशेषो जीवः । संग्रह एकस्मिन् घटे वहुषु वा घटेषु नामस्थापनाद्रव्यलक्षणेषु अतीताना-गतवर्त्तमानेषु पर्यायेषु सामान्यजीवसत्ताग्राहकज्ञानविशेषः सूक्ष्मनिगोदात् सिद्धत्वपर्यंतेषु तच्छरीरेषु च ज्ञशरीरभव्य-शरीररूपेषु च तुल्यजीवज्ञानविशेषसंग्रहाध्यवसायः आधिक्येनावसीयंते परिच्छिद्यंते ततो येन सोऽध्यवसायः । व्यवहारस्तु जलाहरणादिव्यवहारयुक्तो घटो घटः, सुखदुःखवेत्तृत्वादिव्यवहारपरो जीवो जीवः । ऋजुसूत्रस्तु वर्त्तमाननामस्थापनाद्रव्यभावघटानां चेष्टादिपर्यायाणां वाचके पटः, एवं चतुर्निक्षेपमयो जीवः द्रव्यभावप्राणाधारत्व-

जीवत्ववस्तुतया वर्त्तमानो ग्राह्यः, सांप्रतस्तु घटत्वशब्दवर्त्तमानसर्वपर्यायग्राही जीवत्वादिनामावयवाशक्त्यवर्त्ती जीवः इति, समभिरूढस्तु घटे कुटत्वादिपर्यायासंक्रमरूपः यत्पर्यायवृत्तितत्समुदितपर्यायाभिधायिजीवान्यतरपर्यायोऽसंक्रमस्वपर्यायवाचको जीवः, एवंभूतस्तु ज्ञानदर्शनसंपूर्णपर्यायप्रवृत्तिवर्त्तिजीव इत्यभिधायिका । उक्तंच तत्त्वार्थवृत्तौ—नैगमेन देशग्राहिणा, संग्रहेण सामान्यग्राहिणा, व्यवहारेण विशेषग्राहिणा, ऋजुसूत्रेण वर्त्तमानवस्तुग्राहिणा, शब्देन वर्त्तमानभावग्राहिणा, समभिरूढेण प्रतिशब्दं भिन्नार्थग्राहिणा, एवंभूतेन स्वस्वपर्यायग्राहिणा, इत्याद्यनेकजीवाजीवेषु नयचालिनीतत्वार्थवृत्तितः ज्ञातव्या । तत्र ज्ञाने किञ्चिद् भाव्यते—तत्र नैगमः अक्षरानंतभागरूपश्चेतनांश एकेंद्रियावस्थः ज्ञानं संग्रहसामान्यसत्तास्थो ज्ञानपरिणामः ज्ञानं व्यवहार अष्टप्रकारमपि ज्ञानं वस्तुपरिच्छेदकत्वात् ऋजुसूत्रः सम्यग्दृष्टेः इह तदभिहृततत्वश्रद्धायिनः यदिंद्रियजमानिंद्रियजं च तत्सर्वं ज्ञानं मिथ्यादृष्टेः सर्वमेव विपर्यासः, शब्दस्तु—श्रुतज्ञानं केवलज्ञाने ज्ञानं, तत्र सांप्रतः श्रुतादिज्ञानचतुष्टयं ज्ञानं, समभिरूढः श्रुतज्ञानकेवलज्ञाने ज्ञानं, एवंभूतः केवलज्ञानं ज्ञानं, इत्येवं स्वपक्षस्थापनपरैर्नयैः स्वाभिमतप्रकाशकैः अनेके वक्तारः प्रतिवदंते विवादास्पदीभवंति । तत्र येषां मनः शमशीलं ते मध्यस्थाः उच्यंते इत्येवं माध्यस्थ्यं समाश्रयणीयम् ॥ ३ ॥

**स्वस्वकर्मकृतावेशाः, स्वस्वकर्मभुजो नराः । न रागं नाऽपि च द्वेषं, मध्यस्थस्तेषु गच्छति ॥ ४ ॥**

व्या० स्वस्वकर्म इति—तेषु कर्मोदयेषु मध्यस्थः समचित्तः न रागं च पुनः न द्वेषं गच्छति कथं भूता नराः ? स्वस्वकर्मकृतावेशाः स्वे स्वे कर्मणि आत्मीयात्मीये कर्मणि कृतः आवेशो यैस्ते स्वकीयकर्मवशा इत्यर्थः । सर्वे स्वस्य कर्मणः

भोक्तारः इत्यनेन स्वकर्मकृतकर्मविपाकोदये शुभे च अशुभे च विपाके पापे सति समानचेतोवृत्तिः यः सुरेंद्रवृंदवंदितचरणोऽपि तथा—दीनजनैः लुब्धकधीवरैः विडंब्यमानोऽपि न रागं च न द्वेषं च गच्छति स मध्यस्थः समचित्तः उच्यते। उक्तं चावश्यकनिर्युक्तौ।

वंदिज्जमाणा न समुक्कसंति, हेलिज्जमाणा न समुज्जलंति। दंतेण चित्ते न चलंति धीरा, मुनीसया (?) इअरागदोसा॥१॥

**मनः स्याद्व्यापृतं यावत्परदोषगुणग्रहे। कार्यं व्यग्रं वरं तावन्मध्यस्थेनाऽऽत्मभावने॥ ५॥**

व्या० मनः स्याद् व्यापृतं इति—परदोपगुणग्रहणे यावत् मनः व्यापृतं व्यापारवत् स्यात् तावत् आत्मभावने आत्मस्वरूपचिंतने व्यग्रं तदायत्तं वरं प्रधानं कार्यं, केन मध्यस्थेन पुरुषेण समभावास्वादनरसिकेन इत्यनेनात्मस्वरूपस्यामूर्त्तस्यागुरुलघुपड्गुणहानिवृद्धिपरिणमनोत्पादव्ययध्रौव्यतालक्षणस्वरूपचिंतनगुणप्रवृत्तिः गुणांतरसहकारप्रवृत्तिस्वरूपचिंतनादिकं तत्र चिंतने व्यग्रस्य सांसारिकगुणदोषचिंतनावकाश एव न भवति, अतएव निर्ग्रंथाः चिंतयंति भावनाचक्रं, घोपयंति द्रव्यानुयोगग्रंथं, प्रश्नयंति परस्परस्वभावविभावपरिणामं, विलोकयंति आत्मस्वरूपं साऽऽवरणं निरावरणं, विभजयंति हेतुगणपरिणामं, त्यजंति अशुद्धनिमित्तानि, विचारयंति निक्षेपं, संमीलयंति, नयाऽनुयोगं, तन्मयीभवंति ध्यानादिषु, यतः अनादिविभवानुगतचेतनावीर्यप्रवर्त्तनगृहीतपरस्वरूपोपादेयतया परदोपगुणावलोकनाशुद्धचिंतननिवारणार्थं मनः स्याद्वादानंतपंचास्तिकायस्वरूपावलोकनाजीवहेयजीयोपादेयज्ञानं कार्यमिति॥ ५॥

**विभिन्ना अपि पंथानः, समुद्रं सरितामिव। मध्यस्थानां परं ब्रह्म, प्राप्नुवंत्येकमक्षयम्॥ ६॥**

व्या० विभिन्ना अपि इति—विभिन्ना अनेकभेदभिन्ना अपि पंथानः पंचध्यानमार्गाः साधनपद्धतयः साधनोपायाः अनेके द्रव्याचरणतः शुक्लध्यानं यावत् सम्यग्दृष्टिअपुनर्बंधकादयः, जिनकल्पाः स्थविरकल्पादयः, मध्यस्थानां मध्यस्थभाववर्त्तिनां एकं अक्षयं परं ब्रह्म प्राप्नुवंति। इत्यनेन सर्वे साधनोपायाः एकं शुद्धं आत्मस्वरूपं समवतरंति। सर्वेषां मोक्षसाधकानां साध्यैकत्वात् कमिव ? समुद्रं सरितां इव, यथा नद्यः समुद्रं गच्छंति एवं तत्वैकत्वपरिणामानां सर्वं साधनं शुद्धात्मभावे अवतरति। अतः रागद्वेषाभावो हितम् ॥ ६ ॥

**स्वागमं रागमात्रेण, द्वेषमात्रात्परागमम्। न श्रयामस्त्यजामो वा, किंतु मध्यस्थया दृशा ॥ ७ ॥**

व्या० स्वागमं इति—स्वागमं गणधरोक्तं आगमं, वयं न रागमात्रेण श्रयामः, यच्च अस्मत्परंपरानुगतैः इदं एवाभिमतं, अस्माकं कल्पमिदं, इति रागातुरत्वेन न जिनागमे रागः वा अथवा परागमं कापिलादिशास्त्रं, न केवलद्वेषमात्रेण परकीयत्वात् नद्वेषः तेन न त्यजामः किंतु परीक्षया यथार्थवस्तुस्वरूपनिरूपणेन सम्यग्ज्ञानहेतुत्वात् नित्याऽनित्याद्यनंतस्वभावकथनेऽप्यविरोधित्वात् मध्यस्थया दृशा जिनागमं श्रयामः। विपर्यासोपेतवस्तुस्वरूपपरीक्षणाऽक्षमत्वेन त्यजामः, न द्वेषमात्रेण त्यागयोग्यत्वात् त्यजामः। उक्तंच।

पक्षपातो न मे वीरे, न द्वेषः कपिलादिषु। युक्तिमद्वचनं यस्य, तस्य कार्यः परिग्रहः ॥ १ ॥

न श्रद्धयैव त्वयि पक्षपातो, न द्वेषमात्रादरुचिः परेषु। यथा वदाप्तत्वपरीक्षया तु, त्वामेव वीरप्रभुमाऽऽश्रयामः ॥ २ ॥
इति ॥ ७ ॥

**मध्यस्थया दृशा सर्वे–ष्वपुनर्बंधकादिषु । चारिसंजीविनीचार–न्यायादाशास्महे हितम् ॥ ८ ॥**

इति मध्यस्थाष्टकम् ॥ १६ ॥

व्या० मध्यस्थया इति—वयं मध्यस्थया दृशा सर्वेषु मैत्री प्रमोदकरुणादिषु हितं कल्याणं आशास्महे इच्छामः, सर्वत्र रागद्वेषपरित्यागानुकूलभावनया हितं सिद्ध्यति, कस्मात् ? चारिसंजीवनीचारन्यायात् तत्रोदाहरणं यथा—कश्चित्पुरुषः अजानन्नपि पशुं संचारयन् पशुत्वपरित्यागचक्षुर्द्योतकहेतुः जातः, स च चारिसंजीविनीचारणरूपो दृष्टांतः तन्न्यायात् तथा चरणादिषु मंदप्रयत्नोऽपि अध्यात्मानुगसमभावपरिणतः आत्मानमनादिपशुत्वभावगतमपहाय स्वरूपोपलब्धिरूपं दक्षत्वभेदज्ञानरूपं चाक्षुषत्वं करोति अत एव सर्वं साध्यसापेक्षस्य साधनं हितं साधनस्य बालक्रीडारूपं । उक्तंच वीतरागस्तोत्रे ।

तथापि श्रद्धामुग्धोहं, नोपालभ्यः स्खलन्नपि । विश्रृंखलापि वाग्वृत्तिः, श्रद्दधानस्य शोभते ॥ १ ॥

पुनः केषु ? अपुनर्बंधकादिषु, अपुनर्बाधकस्वरूपं श्रीहरिभद्रसूरिवचनात् ज्ञेयं, आदिशब्दात् मार्गाभिमुखमार्गपतिताविरतसम्यग्दृष्टिदेशविरतसर्वविरतादिषु सर्वत्र परभावरागद्वेषविनिर्मुक्तात्मस्वभावानुकूलता एव साधनं । उक्तं च योगशास्त्रे ।

आत्मैव दर्शनज्ञानचारित्राण्यथवा यतेः । यत्तदात्मक एवैष, शरीरमधितिष्ठति ॥ २ ॥

आत्मानमात्मना वेत्ति, मोहत्यागाद्यदात्मनः । तदेव तस्य चारित्रं, तद् ज्ञानं तच्च दर्शनम् ॥ २ ॥

आत्माज्ञानभवं दुःख–मात्मज्ञानेन हन्यते । तपसाप्यात्मविज्ञानहीनै–श्छेत्तुं न शक्यते ॥ ३ ॥
सोऽयं समरसीभाव–स्तदेकीकरणं मतम् । आत्मा यदपृथक्त्वेन, लीयते परमात्मनि ॥ ४ ॥ ८ ॥

## इति व्याख्यातं मध्यस्थाष्टकम् ॥ १६ ॥

## अथ निर्भयाष्टकम् ॥ १७ ॥

माध्यस्थ्ये स्थिरत्वं निर्भयस्य भवति, भयमोहोदयात् परिणामचापल्यं भवति, अतः भयपरिहारः कार्यः, आत्माहि शुद्धचिद्रूपाविनश्वरः तेन निर्भय एव, अत्र नामस्थापनानिर्भयौ सुगमौ, द्रव्यनिर्भयः सप्तभयरहितः, भावनिर्भयः कर्मबंधहेतुविभावपरिणतिरहितः, बंधहेतुपरिणामः आत्मसत्तारोधकाभिनवकर्मबंधकत्वान्महाभयं तत् च संवर-परिणामपरिणतानां बंधहेतुपरिणामाव्यापकानां न भवति। नैगमेन सर्वद्रव्याणां, संग्रहेण वस्तुसत्ताया, वस्तुवृत्त्या विनश्वरत्वात्, व्यवहारेण कर्मोदयाव्यापकस्य धीरस्य, ऋजुसूत्रेण निर्ग्रंथस्य, शब्दनयेन ध्यानस्थस्य, समभिरूढनयेन केवलिनः, एवंभूतनयेन सिद्धस्य, निर्भयत्वं अविनश्वरसर्वगुणप्राग्भावात् । अत्र च यथार्थात्मस्वरूपविज्ञातुरुदयिक-भावनिर्ममस्य साधने निर्भयो भवति, अतः निर्भयाष्टकं व्याख्यायते ।

**यस्य नास्ति परापेक्षा, स्वभावाद्वैतगामिनः । तस्य किं नु भयभ्रांति–क्लांतिसंतानतानवम् ॥ १ ॥**

व्या० यस्य नास्तीति—यस्य 'परापेक्षा' पराश्रया, पराशा वा, नास्ति तस्य 'स्वभावाद्वैतगामिनः' स्वभावस्य यत्

अद्वैतं एकत्वं स्वभावाद्वैतं तत्र गमनशीलस्य 'भयः' त्रासः 'भ्रांतिः' भ्रमः 'क्लांतिः' खेदः तस्य 'तानवं' अविस्तारः नु भवति? काक्वर्थः इत्यनेन परवस्तुसंरक्षणे पराशादिना भयं भवति, यः परभावनिःस्पृहः तस्य परभावाभावेन खेदः कुतएवेति॥२

पुनर्निर्भयमूलभावनां दर्शयन्नाह—

**भवसौख्येन किं भूरि–भयज्वलनभस्मना । सदा भयोज्झितं ज्ञान–सुखमेव विशिष्यते ॥ २ ॥**

व्या० भवसौख्येनेति—'भूरि' बहुभयं इह लोकपरलोकादि, तदेव ज्वलनः तस्य 'भस्मना' छारभूतेन चौरदायादराजभयज्वलनदग्धेन भवसौख्येन इंद्रियजेन मन्यमानसौख्येन जात्या दुःखरूपेण किं? न किमपि नैवेत्यर्थः। ज्ञानं तत्वपरिच्छेदानुभवरूपं तस्य सुखं निर्भयं एव अवशिष्यते सर्वाधिकत्वेनांगीक्रियते सुखस्वरूपं च ज्ञाने एव, पौद्गलिके सुखे सुखारोपः भ्रम एव। उक्तंच।

जं पुग्गलजं सुक्खं, दुक्खं चेवत्तिजहयतत्तस्स। गिह्णो महिअललेवो, विडंवणा खिंसणामूलं ॥ १ ॥

अतः पुद्गलग्रहणं न सुखं अकार्यमेव ॥ २ ॥

**न गोप्यं क्वाऽपि नारोप्यं, हेयं देयं च न क्वचित्। क्व भयेन मुनेः स्थेयं, ज्ञेयं ज्ञानेन पश्यतः॥ ३॥**

व्या० न गोप्यमिति—मुनेः परमात्मभावसाध्योपायरतस्य स्वतत्वज्ञानानुभवस्वसंवेदनपरोः 'गोप्यं' गोपनं आच्छादनं तद्योग्यं न किमपि, स्वधर्मस्य परैर्ग्रहीतुमशक्यत्वात् गोप्यं कथं भवति? चपुनः 'नारोप्यं' आरोपोऽसद्गुणस्य स्थापनं तदपि न, यतः स्वरूपेणैवानंतगुणमयत्वात् परगुणेन न गुणित्वप्रसंगः, आरोप्यमपि। क्वापि नास्ति, क्वचित् हेयं न

सर्वहेयस्य हेयत्वेन कृतत्वात्, तथा देयं अपि न, स्वधर्मव्यूहस्य परत्रागमनात्, अतः मुनेः भयेन संत्राणाभिलाषवता क्व स्थेयं ? न क्वापि, स्वयमेव स्वस्य त्रातुं समर्थत्वात्, कथंभूतस्य मुनेः ? 'ज्ञेयं' स्वपरपदार्थस्य समूहं ज्ञानेन अवबोधेन पश्यतः ज्ञायमानस्य ॥ ३ ॥

**एकं ब्रह्मास्त्रमादाय निघ्नन्मोहचमूं मुनिः । विभेति नैव संग्राम–शीर्षस्थ इव नागराट् ॥ ४ ॥**

व्या० एकमिति—मुनिः स्वरूपतः परभावविरतः, न विभेति न भयवान् भवति, किं कुर्वन् ? मोहचमूं विघ्नन्, मोहसैन्यस्य ध्वंसं कुर्वन्, किंकृत्वा ? 'ब्रह्मास्त्रं' ब्रह्मज्ञानं आत्मस्वरूपावबोधः तदेवास्त्रं शस्त्रं आदाय गृहीत्वा, कइव ? संग्रामस्य शीर्षे तत्र तिष्ठति संग्रामशीर्षस्थः 'नागराट्' नागराजो गजश्रेष्ठ इव, यथा गजश्रेष्ठः संग्रामे न विभेति तथा मुनिः कर्मपराजये प्रवृत्तः न भयवान् भवति, योहि स्वरूपासक्तः तस्य परभावध्वंसनोद्यतस्य भयं न, भयं हि परसंयोगविनाशे भवति तद्विनाशश्चास्य क्रियमाण एव अतो न भयं वाचंयमस्य शरीरादिसर्वपरभावविरतत्वात् ॥ ४ ॥

**मयूरी ज्ञानदृष्टिश्चेत्प्रसर्पति मनोवने । वेष्टनं भयसर्पाणां, न तदानंदचंदने ॥ ५ ॥**

व्या० मयूरी इति—'मनोवने' चित्तोद्याने 'चेत्' यदि 'ज्ञानदृष्टिः' स्वभावपरभावविवेचनदृष्टिः मयूरी 'प्रसर्पति' स्वेच्छया विचरति तदा 'आनंदचंदने' स्वरूपानुभवानंदचंदने भयसर्पाणां वेष्टनं न भवतीत्यर्थः इदमुक्तं भवति—ज्ञानेन स्वपरयोर्विभेदे कृते स्वस्यामूर्त्तचिद्घनत्वनिर्धारपरसंयोगस्य परत्वनिर्धारे जाते भयस्योदयः न भवति ॥ ५ ॥

**कृतमोहास्त्रवैफल्यं, ज्ञानवर्म बिभर्ति यः । क्व भीस्तस्य क्व वा भंगः कर्मसंगरकेलिषु ? ॥ ६ ॥**

व्या० कृतमोहास्त्रेति—तस्य स्वरूपानंदभोक्तुः 'कर्मसंगरकेलिषु' कर्मक्षयकरणसंग्रामे 'भीः' भयं क ? भंगः क ? नैवेति, तस्य कस्य ? यः कृतमोहास्त्रवैफल्यं कृतं मोहास्त्रस्य वैफल्यं निष्फलत्वं येन एवंविधं ज्ञानवर्म ज्ञानसंनाहं विभर्त्ति धत्ते, सर्वमोहविदारणदारुणज्ञानसंनाहधरस्य, कर्मकृतस्वगुणघातभीः क ? इदमुक्तं भवति—येन नयविभजनपरीक्षितः स्वपरपदार्थसार्थः तस्य मोहादीनां भयं न ॥ ६ ॥

**तूलवल्लघवो मूढा, भ्रमंत्यभ्रे भयानिलैः । नैकं रोमापि तैर्ज्ञान–गरिष्ठानां तु कंपते ॥ ७ ॥**

व्या० तूलवदिति—'मूढा' तत्वज्ञानविकलाः तूलवल्लघवः अभ्रे आकाशे 'भयानिलैः' भयपवनैः प्रेरिता भ्रमंति, ज्ञानगरिष्ठानां एकं रोमापि तैः पवनैर्नकंपते इत्यनेन सप्तभयसंनिधाने मूढाः परभावात्मत्वज्ञानमुग्धाः तद्वियोगभयेन कंपमानाः इतस्ततः भ्रमंति, येचासंख्यातप्रदेशानंतज्ञानमयस्यात्मनः स्वरूपावलोकिनो ज्ञानगरिष्ठाः अविनाशिचैतन्यभावरक्ताः तेषां अध्यवसायरूपं रोमापि न कंपते किंच गत्वरैः गतैरिति अध्यात्माभ्यासैकत्वानंदानंदिताः सदा निर्भयाः स्वरूपे स्थिराः तिष्ठंति ॥ ७ ॥

**चित्ते परिणतं यस्य, चारित्रमकुतोभयम् । अखंडज्ञानराज्यस्य, तस्य साधोः कुतो भयम् ॥ ८ ॥**

व्या० चित्ते इति—यस्य निर्ग्रंथस्य 'अकुतोभयं' न विद्यते कुतः कस्माद् भयं यस्य तत् चारित्रं स्वरूपस्थिरत्वलक्षणं परिणतं चेतनावीर्यादिसर्वगुणेषु तन्मयीभूतं तस्य साधोः कुतः कस्माद् भयं ? न कस्मादपि कथंभूतस्य मुनेः ?

अखंडज्ञानराज्यस्य अचूर्णितज्ञानराज्यस्य, इत्यनेन वचनधर्मक्षमामार्दवार्जवपरिणतस्य शुद्धज्ञानरमणस्य साधोः द्रव्य-भावमुक्तियुक्तस्य परमाकिंचनस्य न भयं । यथा श्रीकेशिगौतमाध्ययने ।

एगप्पा अजिए सत्तू–कसाया इंदियाणि अ । ते जिणित्तु जहानायं विहरामि अहं मुणी ॥ १ ॥

रागदोसादयो तिव्वा, नेहपासा भयंकरा । ते छिंदित्तु जहानायं, विहरामि जहक्कमं ॥ २ ॥

तथा च नमिराजर्षिवचनं—

बहुखुमुणिणो भद्दं, अणगारस्स भिक्खुणो । सव्वओ विप्पमुक्कस्स, एगं तमणुपस्सओ ॥ १ ॥

इत्यादिपरपुद्गलसंयोगे । यथार्थज्ञानवतः न भयं ॥ ८ ॥

## ॥ इति व्याख्यातं निर्भयाष्टकम् ॥ १७ ॥

## ॥ अथ अनात्मशंसाष्टकम् ॥ १८ ॥

निर्भयत्वं सर्वपरभावत्यागे भवति, परभावत्यागश्च तेषु परभावेषु अनात्मनाज्ञानेन भवति, तदर्थं यदात्मव्यतिरिक्तं तदनात्म तस्य शंसनं कथनं तत्स्वरूपं अनात्मशंसाष्टकं व्याख्यायते । तत्र नामस्थापनासुगमा, द्रव्यतः अनात्मशंसनं द्विविधं, बाह्यं अंतरंगं च, तत्र बाह्यं लौकिकं यत्स्वभोगादिप्रयोजनाभावे परधनग्रहकलत्रादौ न ममेदं इत्याग्रहरूपं, तथा बाह्यं लोकोत्तरं यत् धनस्वजनतनुप्रमुखं विनाशित्वेन परभवे असहायत्वेन दुःक्खोत्पत्तिरूपेषु स्वार्थप्रतिबद्ध-स्वजनेषु यत् परत्वैकाचिंतनरूपांतरस्य ज्ञानं, भावतः पुनः कुप्रावचनिकं अशुद्धं मोक्षाभिलापपूर्वकं यत् तामिलस्य

परित्यागतुल्यं, शुद्धं तु सम्यग्दर्शनपूर्वकतत्वातत्वविवेचनोपयुक्तं सम्यग्ज्ञानेन आत्मनः स्वद्रव्यस्वक्षेत्रस्वकालस्वभावात् भिन्नं उपाधिकत्वं तत्सर्वमपि पररूपं न मदीयं इति वास्तव्यं भेदज्ञानं तदनात्मशंसनं तत्करणे तत्वज्ञानं भवति, तदपि अनिष्टेषु अजीवेषु जीवाश्रितकर्मपुद्गलेषु तद्विपाकेषु तन्निमित्तोत्पन्नाशुद्धविभावपरिणामेषु अनात्मत्वं यावद्व्यवहारः तावदसन्निमित्तपरायत्तचेतनावीर्यपरिणत्या भावयोगचेतनाविकल्पेषु परत्वं ऋजुसूत्रः द्रव्यौदयिकसदाचारसत्यभाषा-सत्यमनोयोगादिषु साधनसंवराध्यवसायेषु सन्निमित्तावलंबिस्वात्मपरिणामेषु परत्वं शब्दः रूपातीतशुक्लध्यानशैलीकरणा-दिपरत्वं, समभिरूढः स्वात्मपरिणामिकभावानंतज्ञानदर्शनात् अन्यत्सर्वमपि परं इति, एवंभूतः एवं अनात्मत्वं सर्वत्र श्रद्धया सम्यग्दर्शनिनां भिन्नीकरणेन मुनीनां भिन्नीभावेन जिनानां सर्वथा अभावेन सिद्धानां विरतिश्रद्धया स्थाप्यं तत्करणीयं नहि परभावकर्तृत्वभोक्तृत्वाश्रयत्वसंयोगित्वं चेतनस्य कार्यं इति साधकावकाशः आत्मैव सामायिकं सामा-यिकार्थ इत्याद्यर्हद्वाक्यानुसारिभवितव्यं । उक्तं च योगशास्त्रे ।

अमूर्त्तस्य चिदानंद–रूपस्य परमात्मनः । निरंजनस्य सिद्धस्य, ध्यानं स्याद्रूपवर्जितम् ॥ १ ॥
इत्यजस्रं स्मरन् योगी, तत्स्वरूपावलंबनः । तन्मयत्वमवाप्नोति, ग्राह्यग्राहकवर्जितम् ॥ २ ॥
अनन्यशरणीभूय, स तस्मिन् लीयते तथा । ध्यातृध्यानोभयाभावो, ध्येयेनैकं यथा व्रजेत् ॥ ३ ॥
सोऽयं समरसीभावस्तदेकीकरणं मतम् । आत्मा यदपृथक्त्वेन, लीयते परमात्मनि ॥ ४ ॥
अलक्ष्यं लक्ष्यसंबंधात्स्थूलात्सूक्ष्मं विचिंतयेत् । सालंबाच्च निरालंबं, विशुद्धं तत्वमंजसा ॥ ५ ॥

इत्यात्मस्वरूपध्यानी सर्वं परमनात्मत्वेन जानाति स आत्मवित् प्रशंसां न करोति तदेवाह ।

**गुणैर्यदि न पूर्णोऽसि, कृतमात्मप्रशंसया । गुणैरेवासि पूर्णश्चेत्कृतमात्मप्रशंसया ॥ १ ॥**

व्या० गुणैरिति—" यदि गुणैः " केवलज्ञानादिभिः पूर्णः न असि तर्हि 'आत्मप्रशंसया' व्यर्थात्मस्तुत्या 'कृतं' नाम श्रितं निर्गुणात्मनः का प्रशंसा ? पौद्गलिकोपाधिजा गुणा इति मूढा वदंति तैर्न प्रशंसा 'चेद्' यदि सम्यग्दर्शन-ज्ञानचारित्रतपोरूपैः साधनगुणैः क्षायिकज्ञानदर्शनचारित्ररूपैः सिद्धगुणैः पूर्णः तर्हि वा च ( चि ) कात्मकप्रशंसया कृतं श्रितमित्यर्थः प्राग्भाविताः गुणा स्वतएव प्रकटीभवंति नेक्षुयष्टिः पलालावृता चिरकालं तिष्ठति इति का स्वमुखात्स्व-गुणप्रशंसना ॥ १ ॥

पुनर्व्यवहारेण दर्शयति—

**श्रेयोद्रुमस्य मूलानि, स्वोत्कर्षांभः प्रवाहतः । पुण्यानि प्रकटीकुर्वन्, फलं किं समवाप्स्यसि ? ॥ २ ॥**

व्या० श्रेयोद्रुम इति—भो भद्रः ! 'पुण्यानि' पवित्राणि "श्रेयोद्रुमस्य मूलानि" कल्याणवृक्षस्य मूलानि "स्वोत्कर्षांभः प्रवाहतः" स्वस्य उत्कर्षः औत्सुक्यं स एव अंभः प्रवाहः तस्मात् " प्रकटीकुर्वन् " व्यक्तं कुर्वन् किं फलं समवाप्स्यसि ? अपि तु नैव यस्य द्रुमस्य मूलं उत्खातं तेन फलोत्पत्तिर्न भवति ॥ २ ॥

**आलंबिता हिताय स्युः, परैः स्वगुणरश्मयः । अहो स्वयंगृहीतास्तु, पातयंति भवोदधौ ॥ ३ ॥**

व्या० आलंबिता इति—" स्वगुणरश्मयः " आत्मीयगुणरज्जवः " परैः " अन्यैः " आलंबिताः " स्मरणाचिंतनेन गृहीता " हिताय " कल्याणाय स्युः, स्वसुखाय भवंति, " अहो " इति आश्चर्ये स्वगुणाः स्वयंगृहीता भवोदधौ पातयंति स्वमुखेन स्वगुणोत्कर्षः न कार्यः ॥ ३ ॥

**उच्चत्वदृष्टिदोषोत्थ–स्वोत्कर्षज्वरशांतिकम् । पूर्वपुरुषसिंहेभ्यो, भृशं नीचत्वभावनम् ॥ ४ ॥**

व्या० उच्चत्वदोष इति—अभ्यासात्प्राप्तज्ञानविनयतपोरूपगुणांतर्ज्वलितमहामोहोदयेन आत्मनि उच्चत्वं ' अहं गुणी मया प्राप्तमिदं ज्ञानं विनयगुणवानहमिति उच्चत्वदृष्टिदोषेण उत्थो यः स्वोत्कर्षः स एव ज्वरः तस्य शांतिकं उपशमकारणं पूर्वपुरुषाः अर्हदादयः ते एव सिंहाः तेभ्यः आत्मन्यूनत्वभावनं मानोदयतापनिर्वापणं ज्ञेयं ।

धन्नो धन्नो वयरो सालिभद्दो य थूलभद्दो अ । जेहिं विसयकसाया चता रत्ता गुणे नियए ॥ १ ॥

धन्याः पूर्वपुरुषाः ये वाताश्रवा अनादिभुक्तपरभावास्वादनरामणीयकं त्यजंति, सदुपदेशज्ञातसत्तासुखेप्सया आत्मधर्मश्रवणसुखं अनुभूयमानाः चक्रिसंपदो विपद इव मन्यन्ते, स्वगुणेषु धन्यः स्थूलभद्रः योह्यत्यातुररक्तकोशा प्रार्थनाकंपितपरिणामः, अहं तु निरर्थककुविकल्पैः चिंतयामि विषयविपोपायान् । उक्तं च ।

संतेवि कोवि उज्झई, कोवि असंतेवि अहिलसईभोए । चइ इयरचयणेचि दट्ठुं पभवेण जह जंवू ॥ १ ॥

इत्यादिभावनया स्वदोषचिंतनेन आत्मोत्कर्षपरिणामो निवार्य ॥ ४ ॥

**शरीररूपलावण्य–ग्रामाराम धनादिभिः । उत्कर्षः परपर्याये–श्चिदानंदघनस्य कः ॥ ५ ॥**

व्या० शरीरेति—“ चिदानंदघनस्य ” चिद्ज्ञानं आनंदः सुखं ताभ्यां घनस्य आत्मनः परपर्यायैः संयोगसंभवैः पुद्गलसंनिकर्षोद्भवैः क उत्कर्ष उन्मादः कैरिति शरीराणि औदारिकादीनि विनाशिस्वभावानि रूपं संस्थाननिर्माणवर्णनामकर्मोद्भवं लावण्यं चातुर्यं सौभाग्यनामोदयनिष्पन्नं वेदादिमोहसंनिकर्षसंभवं ग्रामः जननिवासलक्षणः आरामाः वनोद्यानभूमयः धनं गणिमधरिमादि तेषां द्वंद्वः तैः क उत्कर्षः परत्वात् कर्मबंधनिबंधनात् स्वस्वरूपरोधकात् तत्संयोगः निंद्य एव तर्हि क उत्कर्षः ? उक्तं च—उत्तराध्ययने—

धणेण किं धम्मधुराहिगारे, सयणेण वा कामगुणेहिं चेव। समणा भविस्सामो गुणोह धारी, बहिं विहाराअभिगम्मभिक्कुं ॥१॥
न तस्स दुक्खं विभजंति णाईओ, न मित्तवग्गा न सुआ न बंधवा। इक्कोसयं पच्चणु होइ दुक्खं कत्तारमेवं अणुजायकम्मं ॥२॥

अतः आत्मगुणानंदपरिणतानां कर्मोपाधिसंभवे उत्कर्षो न भवति ॥ ५ ॥

**शुद्धाः प्रत्यात्मसाम्येन, पर्यायाः परिभाविताः । अशुद्धाश्चाप्रकृष्टत्वात्स्वोत्कर्षाय महामुनेः ॥ ६ ॥**

व्या० शुद्धा प्रत्यात्मइति—महामुनेःनिर्ग्रंथस्य पाकोत्तीर्णजात्यकार्त्तस्वरवद्गृहीतात्मस्वरूपस्य शुद्धाः पर्यायाः सम्यग्ज्ञानचरणध्यानप्राग्भावरूपा आत्मपर्यायाः न उत्कर्षाय भवंति । कथं न भवंतीत्याह—प्रत्यात्मसाम्येन परिभाविताः आत्मानं आत्मानं प्रति प्रत्यात्म तत्र साम्येन तुल्यत्वेन भाविताः । भावना च ‘ किमाधिक्यं मम जातं ? तेन एते ज्ञानादयो गुणाः सर्वात्मनि संत्येव सर्वसाधारणे क उत्कर्ष ? इति भाविताशयः सर्वजीवानां ज्ञानाद्यनंतपर्यायत्वं तुल्यं सिद्धसंसारस्थयोः न सत्ताभेदः । उक्तं च संवेगरंगशालायाम् ।

नाणाइणंतगुणोववेयं, अरूवमणहं च लोगपरिमाणं । कत्ता भोत्ता जीवं मन्नहुसिद्धाणतुल्लमिणं ॥ १ ॥

श्रीपूज्यैश्च " जीवो गुणपडिवन्नो न यस्स दव्वट्ठियस्स सामाइअं " । तथा गणांगे ' एगे आया ' इत्यादि पाठात् सर्वत्र तुल्यत्वे आत्मनः सद्गुणप्राकट्ये क उत्कर्षः अशुद्धाः पर्याया औदयिकाः शक्रचक्रित्वादयः अपकृष्टत्वात् तुच्छत्वात दोषत्वात् गुणघाततत्त्वज्ञानरमणोपघातत्वात् शोफरोगपुष्टत्ववत् न उत्कर्षाय भवंति, किमेभिः पुद्गलोपचयरूपैः परोपाधिजैः संसर्गैश्च मे कदा निवृत्तिः एभ्य इति संवेगनिर्वेदपरिणतानां नोन्माद इति ॥ ६ ॥

पुनः आत्मानमुपदिशति—

**क्षोभं गच्छन्समुद्रोऽपि, स्वोत्कर्षपवनेरितः । गुणौघान् बुद्बुधीकृत्य विनाशयसि किं मुधा ॥ ७ ॥**

व्या० क्षोभं गच्छन्निति—हे हंस! स्वतत्वजलपूर्णस्वरूपमानसनिवासरसिक त्वं " समुद्रोऽपि " मुद्रा साधुलिंगरूपा तया युक्तोऽपि " स्वोत्कर्षपवनेरितः " साहंकारपवनप्रेरितः क्षोभं गच्छन् अध्यवसायैः एवमेवं भवन् गुणौघान् अभ्यासोत्पन्नान् श्रुतधरव्रतधरलक्षणान् आमर्पौषधिरूपान् बुद्बुदीकृत्य " मुधा " व्यर्थं किं विनाशयसि ? प्राप्तगुणगंभीरो भव, स्वगुणाः स्वस्यैव हितहेतवः तन्न, किं परदर्शनेन मानोपहतस्य गुणाः तुच्छीभवन्ति अतः न मानो विधेयः ॥७॥

**निरपेक्षा अनवच्छिन्नानंतचिन्मात्रमूर्त्तयः । योगिनो गलितोत्कर्षापकर्षानल्पकल्पनाः ॥ ८ ॥**

## इति अनात्मशंसाष्टकम् ॥ १९ ॥

व्या० निरपेक्षा इति—योगिनः यमनियमाद्यष्टांगयोगाभ्यासोत्पन्नरत्नत्रयीलक्षणस्वयोगसिद्धाः ईदृशा भवंति,

' निरपेक्षाः ' निर्गता अपेक्षा अपेक्षणं येभ्यस्ते निरपेक्षाः अपेक्षारहिता इत्यर्थः । ' अनवच्छिन्ना ' अवच्छेदरहिता । " अनंतचिन्मात्रमूर्त्तयः " अनंतं प्रांतरहितं चित् ज्ञानं तन्मात्रा ज्ञानमात्रा मूर्त्तिः येषां ते अनंतचिन्मात्रमूर्त्तयः इत्यनेन परभावानुगतचेतना विकलां स्वच्छस्वरूपानुगतचिंतनपरिणताः " गलितोत्कर्षापकर्षाः " गलितः उत्कर्षः उन्मादः अपकर्षः दीनतां तयोः अनल्पाः कल्पनाः विकल्पजालपलानि येषां एवंविधाः योगिनः ज्ञानपरिणताः ज्ञानैकरसाः तिष्ठंति ते एव तत्वसाधनचिन्मया इति अतः मानोन्मादजनकः स्वोत्कर्षो निवार्यः ॥ ८ ॥

इति व्याख्यातं अनात्मप्रशंसनाष्टकम् ।

## अथ तत्वदृष्ट्यष्टकम् ।

विशिष्टोदयेन पुण्यप्राग्भावभारभारितस्य क्षयोपशमकत्वादि प्राग्भारोत्पन्नानेकैकांतिकतात्विकविकल्पकल्पनागौरवगरिष्ठस्य तत्वज्ञानविकलजगज्जंतुकृतस्तवनापूरपूरितश्रवणस्य तत्वदृष्टिं ऋते स्वोत्कर्षपरिहारो न भवति, अतस्तत्वदृष्टिः कार्या, तस्य भावः तत्वं वस्तुस्वरूपं जीवे जीवत्वं तत्वं अनंतचैतन्यरूपं अजीवे अचैतन्यस्वरूपं तत्वं नाम अविपरीतस्याद्वादगोचरं जीवादिपदार्थस्वरूपं तत्रापि स्वस्वस्थाने धर्माधर्माकाशपुद्गलजीवानां तत्वत्वं तथापि अस्य ममात्मनः मत्स्वरूपं शुद्धचिद्रूपं अनंतानंदरूपं असंख्येयप्रदेशानंत ज्ञानादिपर्यायपरिणामिकोत्पादव्ययध्रौव्यत्वषड्गुणपरिणतागुरुलघुपारमार्थिकैकांतिकात्यंतिकनिरतिशयाबाधनिःश्रेयसरूपं स्वतत्वं, तत्र दृष्टिः दर्शनं श्रद्धाप्रतिप्रेक्षणं वा तत्वावलोकनं यथार्थावबो-

धयुक्ता श्रद्धादृष्टिः तत्वदृष्टिः, सा च नामतः उल्लापः अनेकानां, स्थापनातः तद्विचारणा स्थिरचित्तानां मुद्रान्यासाद्यवलंबिनां, द्रव्यतः संवेदनज्ञानं विविक्ततत्वानां भावतः अनुभावात्मस्पर्शज्ञाननिमग्नचित्तानां, संवेदनज्ञानं यावन्नयचतुष्टयं नयत्रयं स्पर्शज्ञानात्मकसम्यग्दर्शनसम्यक्चारित्रैकत्वध्यानैकतानिष्पन्नकेवलज्ञानिनां उत्सर्गतः तत्वदृष्टिर्बोद्धव्या सर्वोपायसमूहतः स्वतत्वे दृष्टिः कार्या तदर्थमुपदेशः ।

रूपे रूपवतीदृष्टिर्दृष्ट्वा रूपं विमुह्यति । मज्जत्यात्मनि नीरूपे तत्त्वदृष्टिस्त्वरूपिणी ॥ १ ॥

व्या० रूपे इति—" रूपवती दृष्टिः " पौद्गलिकापौद्गलिकात्मिका पुद्गलस्वरूपग्राहिणी ' दृष्टिः ' चक्षुः ' रूपं ' श्वेतादिभेदं दृष्ट्वा ' रूपे ' वर्णादौ वर्णगंधरसस्पर्शलक्षणे ' विमुह्यति ' मोहसाद्भवति पुनः ' अरूपिणी ' रूपरहिता दृग् ज्ञानरूपा आत्मचैतन्यशक्तिलक्षणा तत्वदृष्टिः ' नीरूपे ' निर्गतमूर्त्तधर्मिणि वर्णादिरहिते आत्मनि शुद्धचैतन्यलक्षणे ' मज्जति ' मग्नतां प्राप्नोति स्वरूपलीना भवति अतः बाह्यदृष्टित्वं अनादि विहाय स्वरूपोपयोगे दृष्टिः कार्या ॥ १ ॥

भ्रमवाटी बहिर्दृष्टिर्भ्रमच्छायांतरीक्षणम् । अभ्रांतस्तत्वदृष्टिस्तु, नास्यां शेते सुखाऽऽशया ॥ २ ॥

व्या० भ्रमवाटी इति—" बहिर्दृष्टिः " भ्रमोत्पन्ना भ्रमहेतुरिति निवारणीया भवहेतुत्वात् तत्वदृष्टिः श्रेयोऽभ्रमवाटी भो भव्य बहिर्दृष्टिः बाह्यभावावलोकनं ' शोभनं इदं अशोभनं इदं कृतं इदं करोमि इदं कार्यं ' इत्याद्यवलोकनरूपा दृष्टिः भ्रमवाटी भ्रमस्य वाटी रक्षिका वृत्तिः भ्रमविकल्पवर्द्धनी बाह्यावलोकनेन तदिष्टानिष्टतादिचिंतनेन विकल्पकल्पना जायते, चेतना च परावलोकनव्याकुलिता स्वतत्वविमुखा तत्रैव रमते । उक्तं च ।

रागे दोसे रतो, इट्ठाणिट्ठेहिं भमसुहं पत्तो । कप्पेइ कप्पणाओ, मज्झेयं अहंपि एयस्स ॥ १ ॥

तदीक्षणं भ्रमप्रकाशः तादृग्एकांतारोपजं ज्ञानं तु शुभपुद्गलसंयोगे सुखारोपः तदप्राप्तौ अशुभप्राप्तौ दुःखारोपरूपं ज्ञानं भ्रमच्छाया भ्रमस्य शीलनता तत्र भ्रमालव एव रमंते तु पुनः अभ्रांतः तत्त्वदृष्टिः यथार्थतत्वे स्याद्वादे स्वपरस्वभावदर्शने दृष्टिः यस्य तत्वज्ञः स्वरूपानुभवरक्तः अस्यां भ्रमच्छायायां सुखाशया सुखप्राप्तीच्छया न शेते किंतु पूर्वकर्मोदयेन तत्र वर्त्तमानोऽपि तप्तलोहशिलापादमोचनवत् सशंकः साशंका च दुःखमेवेदमिति जानन् निर्वेदवानेव भवति । उक्तं च—

एएविसया इट्ठा, तत्तोविन्नूणमिच्छदिट्ठीणं । विन्नाईयत्तत्ताणं, दुहमूलदुहफलाचेव ॥ १ ॥

जह चम्मकरो चम्मस्स गंधं नो णायइफले लुद्धो । तह विसयासी जीवो, विसये दुक्खं न जाणंति ॥ २ ॥

सम्मदिट्ठी जीवो, तत्तरुह आयभावरमणपरा । विसये भुजंतो विहु, नो रज्जइ नो वि ( रवज्जेइ ) मज्जई ॥ ३ ॥

अतः वाह्यावलंविचेतनावीर्या कार्या च स्वरूपावलंविनी ॥ २ ॥

**ग्रामारामादि मोहाय, यद् दृष्टं बाह्यया दृशा । तत्वदृष्ट्या तदेवांतर्नीतं वैराग्यसंपदे ॥ ३ ॥**

व्या० ग्रामारामादि इति—" वाह्यया दृशा " वाह्यदृष्ट्या यद् ग्रामारामादि दृष्टं मोहाय भवति असंयमवृद्धये भवति तदेव ग्रामादिकं " तत्वदृष्ट्या " स्वपरभेदकृत्रिमाकृत्रिमहंत्र्या ( दृशा ) " अंतर् " आत्मोपयोगमध्ये " नीतं " प्रापितं " वैराग्यसंपदे " वैराग्यं औदासीन्यं तत्संपदावृद्धये भवति । उदाहरणं एगे आयरिआ नाणचरणप्पहाणा सुअ-

रहस्सपारगा भव्वजीवाणं ( पडिबोहगा ) अणेगसमणगणपरिबुडा गामाणुगामं दुइज्जंता वायणाइहिं समणसंघं गायंता मग्गे पंचसमि इति गुत्तिजुत्ता अणिच्चाईभावीयसजोगा, पत्ता एगं वणं अणेगलयाईणं नीलं नीलाभासं सउणगणनिवासं, तओवणस्स पुप्फफल लच्छीं पासिऊण निग्गंथाणं वयंति ईअवणं भो भो निग्गंथा पासह एए पत्ता पुप्फागुला फुला जे चेयणा लरकणाणंतसत्तिं आवरीऊण नाणावरणदंसणावरणाचरित्तमोहमिच्छबलमोहांतराय उदयेण दीणाहीणादुट्टिया एगेंदियमावन्ना कंपंता सहा वलहया दुहया अत्ताणा असरणा जम्मणा मरणावगाढा अहो अणुकंपाजुग्गए एएको एस अणुकंपं कुणई मणसवणनयणविगलाणं, इ अ भणिऊण जणिअसंवेग्गचलंति पुरओ ते निग्गंथावि नाणावरणाई बंधकारणे दुगंछता पंथओ चलिया अहह–आयाआयं हणइ आयं गुणेसंत ए विधसे इमह विसए रम्भे चयई नाणाइ गुणभावे ( १ ) इय चिंतंतागच्छंति ताव पत्तं महानयरं अणेगमीयवाइयरवेणं विवाहाईऊसवेण देवलोगरूपरमणिज्जं आयरिओ समणसंघं भणइ–भो भो ! निग्गंथा ! अज्जं एयंम्मि नयरे मोहधाडी निवडिया तेण एए कहंति लोगा उच्छलंति भओविग्गता अप्पाणं न जुज्जई इत्यपवेसो मा कोविज्ञयटविविहलोहविज्जाहि पासबद्धा लोगा अणुकंपणिज्जा, मोहसुरामत्ता नो उवएस जुग्गता अग्गेनिगच्छह, ता साहवो भणंति चारु कहियं मोहाय सयपुडेविसयपत्ते खित्ते गमणु न जुज्जई हयवेरगवरा विहरई तेणं आयसुहट्ठियाणं गामनगराई वेरगाकारणं हवइ इति ॥ ३ ॥

बाह्यदृष्टेः सुधासार–घटिता भाति सुंदरी । तत्वदृष्टेस्तु साक्षाद्विण्मूत्रपिठरोदरी ॥ ४ ॥

व्या० बाह्यदृष्टेरिति—“ वाह्यदृष्टेः ” संसाररक्तस्य “ सुंदरी ” स्त्री “ सुधासारघटिता भाति ” अमृतमयी इव

भाति तदर्थमर्जयंति धनं, त्यजंति प्राणान्, मोहयुक्ता मुंजादयोऽनेके तु पुनः " तत्वदृष्टे " निर्मलानंदात्मस्वरूपावलोकनदक्षस्य " सा " सुंदरी " विण्मूत्रपिठरोदरी " भाति " विट् " विष्ठा " मूत्रं " प्रस्रवणं " पिठरं " अस्थि तेषां उदरी भाजनरूपा भाति । उक्तं च ।

रसासृग्मांसमेदोऽस्थि–मज्जाशुक्रांत्रवर्चसाम् । अशुचीनां पदं कायः, शुचित्वं तस्य तत्कुतः ? ॥ १ ॥

वंचकत्वं नृशंसत्वं, चंचलत्वं कुशीलता । इति नैसर्गिका दोषा यासां तासु रमेत कः ? ॥ २ ॥

भवस्य बीजं नरक–द्वारमार्गस्य दीपिका । शुचां कंदः कलेर्मूलं दुःखानां खानिरंगना ॥ ३ ॥

अन्यशास्त्रेऽपि—

कांताकनकसूत्रेण, वेष्टितं सकलं जगत् । तासु तेषु विरक्तो यो, द्विभुजः परमेश्वरः ॥ १ ॥

इत्यादि तत्वज्ञस्य नारी मोहहेतुत्वात् भवबीजरूपा भाति ॥ ४ ॥

पुनः उपदिशति—

**लावण्यलहरीपुण्यं, वपुः पश्यति बाह्यदृग् । तत्वदृष्टिः श्वकाकानां, भक्ष्यं कृमिकुलाकुलम् ॥ ५ ॥**

व्या० लावण्येति—" बाह्यदृग् " लोकानुगतदृष्टिः " वपुः " शरीरं " लावण्यलहरीपुण्यं " सौंदर्यलहरीपवित्रं पश्यति तत्त्वदृष्टिः सम्यग्ज्ञानी तत्तु " श्वकाकानां भक्ष्यं " कृमिकुलाकुलं कृमिमयं पश्यति । उक्तं च—

नवस्रोतः स्रवद्विस्ररसनिस्यंदपिच्छले । देहेऽपि शौचसंकल्पो, महन्मोहविजृंभितम् ॥ १ ॥

अतः कर्मोपाधिजं शरीरमहितं बंधहेतुत्वात् तत्र रागाभाव एव वरं ॥ ५ ॥

**गजाश्वैर्भूपभुवनं, विस्मयाय बहिर्दृशः । तत्राश्वेभवनात्कोऽपि, भेदस्तत्त्वदृशस्तु न ॥ ६ ॥**

व्या० गजाश्वैरिति—"बहिर्दृशः" बहिर्दृष्टेः नरस्य "भूपभुवनं" नृपगृहं "गजाश्वैः" वारणाश्वगणैर्व्याप्तं "विस्मयाय" आश्चर्याय भवन्ति, "तत्त्वदृशः" तत्त्वज्ञानिनः तत्र राजमंदिरे अश्वेभवनात् करितुरगवनात् कोऽपि भेदः न, अनंतज्ञानानंदाद्वैतात्मानुभवरक्तो वनं नगरतुल्यं जानीते ॥ ६ ॥

**भस्मना केशलोचेन, वपुर्धृतमलेन वा । महांतं बाह्यदृग् वेत्ति चित्साम्राज्येन तत्त्ववित् ॥ ७ ॥**

व्या० भस्मनाइति—"बाह्यदृग्" बाह्यदृष्टिः "भस्मना केशलोचेन" केशाकर्षणेन "वपुषा" शरीरेण धृतो मलो येन तेन महत्वं साधुत्वं आचार्यत्वं वेत्ति महत्त्वस्वरूपापरिज्ञानी जानाति "तत्त्ववित्" तत्त्वज्ञानी अरूपात्मस्वरूपावबोधी "चित्साम्राज्येन" ज्ञानसाम्राज्येन ज्ञानपूर्णत्वेन रत्नत्रयीपरिणमनेन शुद्धाखंडानंदसाधनप्रवृत्त्या स्वगुणप्राग्भावेन महांतं "वेत्ति" जानाति । उक्तं च षोडशके—

बालः पश्यति लिंगं, मध्यमवृत्तिर्विचारयति वृत्तम् । आगमतत्त्वं तु बुधः, परीक्षते सर्वयत्नेन ॥ १ ॥

उत्तराध्ययनेऽपि—

नवि मुंडिएण समणो, नउँ कारेण बंभणो । न मुणी रन्नवासेण, कुसचीरेण न तापसो ॥ १ ॥

समयाए समणो होई, बंभचेरेण बंभणो । नाणेन य मुणी होई, तवसा होई तावसो ॥ २ ॥

आत्मा सामायिकं भवति, इत्यादि व्याख्यायां अतः आत्मज्ञानरमणविश्रामानुभवलीना अदीना मुनयो भवंति ॥७॥

**न विकाराय विश्वस्यो–पकारायैव निर्मिताः । स्फुरत्कारुण्यपीयूष–वृष्टयस्तत्त्वदृष्टयः ॥ ८ ॥**

व्या० न विकाराय इति—आचार्यैः गुरुभिः ग्रहणसेवनाशिक्षादानेन सूक्ष्मागमरहस्य शिक्षणेन येः पाठकैः तत्त्वदृष्टयः पुरुषाः " निर्मिता " निष्पादिता " विकाराय न " रागद्वेषोपाधिवृद्धये न किंतु " विश्वस्य " त्रिभुवनस्य " उपकाराय " सदुपदेशदानशुद्धतत्त्वोपलंभाद्युपकाराय निर्मिता इति भावना यथाऽनादिमिथ्यात्वासंयमग्रस्तानां वयं निर्यामकाः तथान्येऽपि यथार्थभावनदक्षा उपकाराय भविष्यंति तेन एभ्यः श्रुतरहस्यं पाठितव्यं । उक्तं च विधिप्रपायां॰ निज्जामउ भवणवत्तारणसधम्मजाणवत्तंमि मोक्खपह सत्थवाहो अन्नाणं धाणचक्खुय ॥ १ ॥ अत्ताणाणंताणं नाहो अनाहाणभव्वसत्ताणं तेणं पुन्येसप्पुरिसगुरुअगच्छभारे नियुत्तोऽसि ॥ २ ॥ इत्यादि । ' भद्दं वहुस्सुयाणं, वहुजनसहेह पुच्छणिज्जाणं ' । वहुश्रुताध्ययने—

समुद्दगंभीरसमा दुरासया अचक्किया केणइ दुप्पहंस गा । सुयस्सपुणो विउलस्स ताइणो खवित्तुं कम्मं गईमुत्तमं गया ॥ १ ॥

इति तत्त्वदृष्टित्वं हितं न अनेकशास्त्रव्यायामे वहुश्रुतत्वं निश्चितसमयज्ञो वहुश्रुतः । उक्तं च संमतौ

जो हेउवायपक्खम्मिहेऊउ आगमे य आगमिओ । सो समणपएएवओ सिद्धंतविराहओ अन्नो ॥ १ ॥

इति नयप्रमाणप्रमाणीकृतस्वपरसमयसाराः स्वरूपासारा निरुद्धमोहप्रचाराः तत्त्वदृष्टयः किंभूता ? इत्याह स्फुरंती कारुण्यं भवसमुद्रतारणोपकारित्वलक्षणं यत् पीयूषं तस्य वृष्टिर्वर्षा यत्र ताः इति जगज्जनतारणकरुणाऽमृतवृष्टिमया

इत्यनेन कथं ते लोकाः तत्वविमुखाः विषयरक्ताः आत्मानं ध्वंसयन्ति ? जैनागमे सति च अनंतगुणपर्यायसत्तात्मके आत्मनि स्वभ्रांत्या रमंते भवाटव्यां अतः कथयामः धर्मरहस्यं इत्युपकारपराः तत्वज्ञाः यतः महात्मानः स्तव्या इति वाह्यदृष्टित्वं परित्यज्य आंतरतत्वावभासनरसिका भवंतु भव्याः ॥ ८ ॥

इति व्याख्यातं तत्त्वदृष्ट्यष्टकम् ॥ १९ ॥

## अथ सर्वसमृद्ध्यष्टकं ॥ २० ॥ व्याख्यायते ।

सर्वा समग्रा समृद्धिः संपदा सर्वसमृद्धिः तत्र नामसमृद्धिः उल्लापनरूपा जीवस्याजीवस्य, स्थापना समृद्धिः शक्तिरूपा, द्रव्यसमृद्धिः धनधान्यादिरूपा, शक्रचक्र्यादीनां लौकिका, लोकोत्तरा पुनः मुनिलब्धिसमृद्धिरूपा ।

आमोसहि[1]विप्पोसहि[2], खेलोसहि[3]जल्लभोसही[4]चेव । संभिन्नसोयं[5] उज्जुमई[6], सव्वोसहि[7] चेव वोधव्वा ॥ १ ॥

चारण[8]आसीविस[9]केवलीय[10] मणनाणि[11]णोवपुव्वधरा[12] । अरिहंत[13]चक्कधरा[14] वलदेवा[15] वासुदेवा[16] य ॥ २ ॥

इत्यादिलब्धयः ऋद्धयः, तत्र केवलज्ञानादिशक्तिर्लोकोत्तरा भावऋद्धिः, सं सम्यक् प्रकारेण ऋद्धिः समृद्धिः सर्वा चासौ समृद्धिश्च सर्वसमृद्धिः, अत्र साधनानवच्छिन्नात्मतत्वसंपदमग्नानां या तादात्म्यानुभवयोग्या समृद्धिः तस्याः अवसरः नयाश्च प्रस्थकदृष्टांतभावनया तत्कारणेषु तद्योग्येषु तदुच्यते तेषु तपोयोगिषु आद्याः तद्गुणेषु सापेक्षेषु अंत्याः इति ।
अत्र प्रथमं आत्मनि समृद्धिपूर्णत्वं भासते तथा कथयति ।

**बाह्यदृष्टिप्रचारेषु, मुद्रितेषु महात्मनः । अंतरेवावभासंते, स्फुटाः सर्वाः समृद्धयः ॥ १ ॥**

व्या० बाह्यदृष्टिप्रचारेषु इति—"महात्मनः" स्वरूपपररूपभेदज्ञानपूर्वकशुद्धात्मानुभवलीनस्य सर्वसमृद्धयः स्फुटाः प्रकटाः "अंतरेव" आत्मांतः एव स्वरूपमध्ये एव (अव) भासंते, यतः स्वरूपानंदमयोऽहं, निर्मलाखंडसर्वप्रकाशकज्ञानवानहं, इंद्रादिऋद्धयः औपचारिकाः अक्षयानंतपर्यायसंपत्पात्रोऽहं, इति स्वसत्ताज्ञानोपयुक्तस्य स्वात्मनि भासंते, कीदृशेषु सत्सु ? बाह्यदृष्टिप्रचारेषु मुद्रितेषु सत्सु "बाह्या दृष्टिः" विषयसंचारात्मिका तस्याः "प्रचारा" विस्ताराः तेषु "मुद्रितेषु" रोधितेषु न हि इंद्रियप्रचारचलोपयोगैः कर्ममलपटलावगुंठिताध्यात्मसंपत् ज्ञायते इति इत्यनेन बहिर्गमनमुपयोगस्य न कर्त्तव्यमिति ॥ १ ॥

**समाधिर्नंदनं धैर्यं, दंभोलिः समता शची । ज्ञानं महाविमानं च, वासवश्रीरियं मुनेः ॥ २ ॥**

व्या० समाधिरिति "मुनेः" स्वरूपज्ञानानुभवलीनस्य साधोः "इयं" उच्यमाना "वासवस्य" इंद्रस्य "श्रीः" लक्ष्मीः शोभा वर्त्तते । अत्र मुनेः पवित्ररत्नत्रयीपात्ररूपेंद्रस्य "समाधिः" ध्यानध्याताध्येयैकत्वेन निर्विकल्पानंदरूपः समाधिः स एव नंदनं वनं, हरेः नंदनवनक्रीडा सुखाय उक्ता, साधोः समाधिक्रीडा सुखाय, तत्राप्यौपाधिकात्मीयकृतो महान् भेदः, स च अध्यात्मभावनाज्ञेयः, अस्य धैर्यं वीर्याकंपता औदयिकभावाक्षुब्धतालक्षणं "वज्रं" दंभोलिः पुनः "समता" इष्टानिष्टेषु संयोगेषु अरक्तद्विष्टता सर्वेऽपि पुद्गलाः कर्करचिंतामण्यादिपरिणताः जीवाश्च भक्ताभक्ततया परिणताः ते सर्वे न मम भिन्नाः एतेषु का रागद्वेषपरिणतिरित्यवलोकनेन समपरिणतिः समता सा शची स्वधर्मपत्नी "ज्ञानं" स्वपर-

भावयथार्थावबोधरूपं "विमानं" सर्वावबोधकरं महाविमानं, इत्यादिपरिवृतः मुनिः वज्रीव भासते । उक्तं च योगशास्त्रे—

पुंसामयत्नलभ्यं ज्ञानवतामव्ययं पदं भूतम् । यद्यात्मन्यात्मज्ञानमात्रमेतत्समाहितं ( भवति ) ॥ १ ॥
श्रयते सुवर्णभावं, सिद्धिरसस्पर्शतो यथा लोहम् । आत्मध्यानादात्मा, परमात्मत्वं तथाऽऽप्नोति ॥ २ ॥

**विस्तारितक्रियाज्ञान–चर्मच्छत्रो निवारयन् । मोहम्लेच्छमहावृष्टिं, चक्रवर्त्ती न किं मुनिः ? ॥ ३ ॥**

व्या० विस्तारितेति—"मुनिः" समस्ताश्रवविरतः द्रव्यभावसंवररतः किं चक्रवर्त्ती न ? अपितु अस्त्येव, किंभूतः ? विस्तारितक्रियाज्ञानचर्मच्छत्रः, क्रिया च ज्ञानं च क्रियाज्ञाने चर्म च छत्रं च चर्मच्छत्रे क्रियाज्ञाने एव चर्मच्छत्रे क्रियाज्ञानचर्मच्छत्रे विस्तारिते क्रियाज्ञानचर्मच्छत्रे येन सः, विस्तारित इत्यनेन सक्रियोद्यतः सम्यग्ज्ञानोपयुक्तः । मोह एव म्लेच्छः तस्य महती वृष्टिः तां निवारयन् मोहम्लेच्छाः उत्तरखंडनाथा तत्प्रयुक्तमिथ्यात्वदैत्यकृता कुवासनावृष्टिः स्वशुद्धसम्यग्दर्शननिवारितकुवासनाचयः मुनिः भावचक्रवर्त्तीव भासते ॥ ३ ॥

**नवब्रह्मसुधाकुंड–निष्ठाधिष्ठायको मुनिः । नागलोकेशवद्भाति, क्षमां रक्षन् प्रयत्नतः ॥ ४ ॥**

व्या० नवब्रह्मेति—"मुनिः" भेदज्ञानगृहीतात्मध्यानः, "नागलोकेशवत्" उरगपतिवत् भाति, किं कुर्वन् ? "क्षमा" पृथ्वी क्रोधापहरणपरिणतिः वचनधर्मात्मिका क्षमा तां रक्षन् धारयन् इति । उरगपतेः क्षमाधारकत्वं लोकोपचारतः, नहि रत्नप्रभाद्या भूमयः केन धृताः, उपमा तु महत्त्वज्ञापिका सामर्थ्यज्ञापिका च । पुनः कथंभूतो मुनिः ? नवं यद्ब्रह्मज्ञानं तदेव सुधा तस्याः कुंडः, तस्य "निष्ठा" स्थितिः तस्या अधिष्ठायकः, इत्यनेन तत्त्वज्ञानामृतकुंडस्थैर्यरक्षकः इति ४

**मुनिरध्यात्मकैलाशे, विवेकवृषभस्थितः । शोभते विरतिज्ञप्ति–गंगागौरीयुतः शिवः ॥ ५ ॥**

व्या० मुनिरध्यात्मेति, अत्र श्लोकत्रये महादेवकृष्णब्रह्मोपमानं औपचारिकं, नहि ते कैलाशगंगासृष्टिकरणोद्यताः, किंतु लोकोक्तिरेषा, तेन श्लेषालंकारार्थं हि वाक्यपद्धतिः, न सत्या । "मुनि" तत्त्वज्ञानी "अध्यात्मं" "आत्मस्वरूपैकत्वं" तद्रूपे कैलाशे आस्थाने, "विवेकः" स्वपरविवेचनं स एव "वृषभः" बलीवर्दः, तत्र स्थितः, "विरतिः" चारित्रकलाऽऽश्रव-निवृत्तिः, 'ज्ञप्तिः' ज्ञानकला शुद्धोपयोगता, ते एव गंगागौर्यौ, ताभ्यां युतः 'शिवः' निरुपद्रवः, उपचारात् शिवः रुद्रः भासते, रुद्रस्य गंगायुतत्वं विद्याधरत्वे पार्वतीमनोरंजनाय विक्रियाकाले वाच्यं ॥ ५ ॥

**ज्ञानदर्शनचंद्रार्क–नेत्रस्य नरकच्छिदः । सुखसागरमग्नस्य, किं न्यूनं योगिनो हरेः ? ॥ ६ ॥**

व्या० ज्ञानदर्शनेति "योगिन" रत्नत्रयपरिणतस्य "हरेः" कृष्णात् किं न्यूनं ?, न किमपि, किंभूतस्य योगिनः ? "ज्ञान-दर्शनचंद्रार्कनेत्रस्य" ज्ञानं सामान्यविशेषात्मके वस्तुनि विशेषावबोधः, सामान्यविशेषात्मके वस्तुनि सामान्यावबोधः दर्शनं, ते एव चंद्रार्कौ नेत्रे यस्य स तस्य, हरेः चंद्रार्कनेत्रत्वं तु लोकोक्तिरेव, पुनः किंभूतस्य योगिनः ?—'नरकच्छिदः' नरकगतिनिवारकस्य, हरेस्तु—नरकाभिधानशत्रुविदारकस्य, सुखसागरमग्नस्य, कृष्णार्थे इंद्रियजसुखलीलासमुद्रमग्नत्वं, योगिनः सुखं सम्यग्ज्ञानदर्शनचारित्रसमाधिनिष्पन्नं तस्य सागरः तत्र मग्नस्य, आध्यात्मिकसुखपरिणामभाजनस्य साधोः केन सह न्यूनता ?, न केनापि इति ॥ ६ ॥

**या सृष्टिर्ब्रह्मणो बाह्या, बाह्यापेक्षावलंबिनी । मुनेः परानपेक्षांतर्गुणसृष्टिस्ततोऽधिका ॥ ७ ॥**

व्या० या सृष्टिर्ब्रह्मण इति—या "सृष्टिः" रचना "ब्रह्मणो" विधातुः सा "बाह्या" लोकोक्तिरूपा असत्या, पुनः बाह्या वा अपेक्षा तस्या अवलंबिका, "मुनेः" स्वरूपसाधनसिद्धिमग्नस्य "अंतः" मध्ये आत्मनि व्यापकरूपा गुणानां सृष्टिः—रचना गुणप्रागभावप्रवृत्तिपरिणतिरूपा, बाह्यभावतः अधिका, "कथंभूता" गुणसृष्टिः ? परानपेक्षा, परेषां अनपेक्षा अपेक्षारहिता पराश्रयालंवनविमुक्ता स्वरूपावलंबनपरा गुणरचना सा सर्वतोऽधिका इति ॥ ७ ॥

**रत्नैस्त्रिभिः पवित्रा या, स्रोतोभिरिव जाह्नवी । सिद्धयोगस्य साऽप्यर्हत्पदवी न दवीयसी ॥ ८ ॥**

व्या० रत्नैस्त्रिभिरिति सिद्धयोगस्याष्टांगयोगसाधनसिद्धस्य साधोः, साऽपि अर्हत्पदवी ज्ञानाद्यनंतचतुष्टयात्मकाष्टप्रातिहार्यान्विता जगद्धर्मोपकारिणी न दवीयसी—न दूरा इत्यर्थः । किंभूता पदवी ?—त्रिभिः रत्नैः सम्यग्ज्ञानदर्शनचारित्रैः पवित्रा, का इव ? स्रोतोभिः-प्रवाहैः जाह्नवी-गंगा इव, इति त्रैलोक्याद्भुतपरमार्थदायकत्वाद्यतिशयोपेता अर्हत्पदवी साधकपुरुषस्य यथार्थमार्गोपेतस्य न दवीयसी, आसन्ना एव इति, एवं सर्वमपि औपाधिकं अपहाय स्वीयरत्नत्रये साधनाः विधेया, येन सर्वा ऋद्धयः निष्पद्यंते ॥ ८ ॥

## इति व्याख्यातं सर्वसमृद्ध्यष्टकं ॥ २० ॥

## अथ कर्मविपाकचिंतनाष्टकम् ॥ २१ ॥

अथावसरायातं निर्ग्रंथत्वसाधनभावनार्थं समतानिष्पत्तिहेतुभूतं कर्मविपाकचिंतनाष्टकं कथ्यते, तत्र यदुत क्रियते-

मिथ्यात्वादिहेतुसमन्वितेन जीवेनेति कर्म—ज्ञानावरणादिकं, अत्र कश्चित् कर्माभावं मन्यमानः प्राह—नास्ति कर्म, प्रत्यक्षानुमानादिप्रमाणागोचरत्वात्, तत्र न च तावत् प्रत्यक्षं कर्म, अतींद्रियत्वात्, नाप्यनुमानसाध्यं अनुमानस्य प्रत्यक्षपूर्वकत्वात्, धूमादिलिंगोपेतमहानसादौ दृष्टे चाहार्ये च तावदनुमानसंभवः, न च तादृशं लिंगं कर्मानुमानजनकं, तस्मात् नाप्यनुमानगम्यं, उपमायाः प्रत्यक्षस्वभावात्, आगमस्य हि नानावाक्यात्, इति न कर्म, इत्याद्यनेकयुक्तिनिवहं वदंतमाह—प्रत्यक्षं कर्म अस्ति, केषां ?--सर्वज्ञानां, अन्येषामपि कार्यानुमानेन प्रत्यक्षं अस्ति सुखदुःखानुभवस्य हेतुः, कार्यत्वादंकुरस्येवेति । अथ यदि भवतः प्रत्यक्षं कार्यं तर्हि कर्म ममापि प्रत्यक्षं कस्मान्न भवति ?, न हि यदेकस्य प्रत्यक्षं तेनापरस्यापि प्रत्यक्षेण भवितव्यं, न हि सिंहसरभादयः सर्वस्य लोकस्य प्रत्यक्षाः, तथापि दक्षैः प्रत्यक्षाः मन्यंते लोके, एवं सर्वज्ञप्रत्यक्षीकृतकर्म ज्ञानावरणीयं पुनः प्रतिप्राणिप्रसिद्धयोः सुखदुःखयोर्हेतुरस्ति, कार्यत्वादंकुरस्येव बीजमिति, यश्चेह सुखदुःखयोर्हेतुः तत्कर्मैवेत्यस्ति, नन्विति स्यात् मतिः—स्रक्चंदनांगनाविषकंटकादय इति दृष्ट एव सुखदुःखयोर्हेतुरस्ति, किमदृष्टस्य कर्मणः तद्धेतुसंकल्पनेन ?, तदयुक्तं, व्यभिचारात् । इह यस्तुल्यसाधनयोरिष्टशब्दादिविषयसुखसाधनसमेतयोरनिष्टार्थसाधनसंप्रयुक्तयोश्च बहूनां वा फले सुखदुःखानुभवलक्षणविशेषस्तारतम्यरूपो दृश्यते, नासौ अदृष्टहेतुमंतरेणोपपद्यते, अनुमानांतरं श्रीविशेषावश्यके ।

किरियाफलभावाउ, दाणाईणं फलं किसीएव्व । न य दाणाई अफलं, मणप्पसायाइ जई बुद्धी ॥ १ ॥
किरियासामन्नाओ, जं फलमस्सावि तं मयं कम्मं । तस्स परिणामरूवं सुखदुक्खफलं जओ भुज्जो ॥ २ ॥

इत्यादि अग्निभूतिवादस्थले ज्ञेयं । तत्र नामस्थापना सुगमा, द्रव्यकर्म कर्मवर्गणागतपुद्गला बध्यमाना बद्धाः सत्तास्थाः, अथवा तद्धेतवोऽपि, भावतः कर्म ज्ञानावरणादिविपाकप्राप्ता गुणरोधादिस्वकार्यरूपाः, नैगमतः मिथ्यात्वादिबंधहेतुजनकपाषंडिपरिचयप्रशंसादयः, संग्रहतः तद्योग्यताविशिष्टौ जीवपुद्गलौ, व्यवहारतः गृह्यमाणवर्गणासमूहः, प्राणातिपातादयश्च, ऋजुसूत्रतः बंधहेतुपरिणता हेतुपरिणताः सत्तास्थाः कर्मदलिका वा, शब्दतः चलोदीरणादिपूर्वकाः विपाकगतदलिकाः, समभिरूढतः ज्ञानाद्यनंतगुणानां मध्ये यद्गुणरोधः तत्तस्यावरणं, एवंभूततः स्वकर्तृता ग्राहकता वेत्तृता व्यापकता कर्मकार्यकरणप्रवृत्ता इति, सिद्धसेनास्तु—"कर्मकर्तृता शब्दनये, वेदकता व्यापकता समभिरूढनये, गुणावरणत्वं एवंभूतनये," इत्यादि भावना कार्या, तत्र विपाकप्राप्ते कर्मणि शुभोदये माध्यस्थ्यं करणीयं तदर्थमुपदेशः ।

**दुःखं प्राप्य न दीनः स्यात्सुखं प्राप्य च विस्मितः । मुनिः कर्मविपाकस्य, जानन्परवशं जगत् ॥ १ ॥**

व्या० दुःखं प्राप्य न दीनः स्यादिति—"मुनिः" तत्त्वरसिकः "दुःखं" असातादि, प्राप्य दीनः न स्यात्, कृतभोगे का दीनता ?, करणकाले अविचारेण करणेन तद्विपाक ईदृशः, एवं च पुनः "सुखं" सुतादिराज्येश्वरराज्यादि प्राप्य विस्मितः न स्यात्, को विस्मयः ?, स्वगुणावरणभूते विपाकमिष्टे कर्मणि, "जगत्" लोकं "कर्मविपाकस्य" शुभाशुभोदयस्य "परवशं" पराधीनं जानन्, सर्वं जगत् कर्माधीनं तत्त्वज्ञानी एवं कर्मविपाकमवगणय्य तत्त्वसाधने यत्नवान् भवति ॥१॥

**येषां भ्रूभंगमात्रेण, भज्यंते पर्वता अपि । तैरहो कर्मवैषम्ये, भूपैर्भिक्षापि नाप्यते ॥ २ ॥**

व्या०—येषां भ्रूभंगेति—'येषां' पुरुषाणां 'भ्रूभंगमात्रेण,' भ्रूविक्षेपेण, 'पर्वता' गिरिवरा अपि भज्यंते, तैर्भूपैः

कर्मणां वैषम्यं कर्मजनिता विषमता तस्मिन् कर्मोदये दुःखावस्थायां, भिक्षापि 'न आप्यते' न प्राप्यते, इति शुभाशुभविपाकवैचित्र्यं ॥ २ ॥

**जातिचातुर्यहीनोऽपि, कर्मण्यभ्युदयावहे । क्षणाद्रंकोऽपि राजा स्यात्, छत्रच्छन्नदिगंतरः ॥ ३ ॥**

व्या० जातिचातुर्येति—कश्चित् रंकोऽपि 'क्षणात्' क्षणमात्रेण, 'अभ्युदयावहे' शुभोदर्के कर्मणि राजा 'स्यात्' भवेत्, कथंभूतः रंकः ?—जातिः मातृका चातुर्यं—दक्षत्वं ताभ्यां हीनः—रहितः अपि भूपो भवति, किंभूतो राजा ?—'छत्रेण' आतपत्रेण, 'छन्नं' छादितं आक्रांतं दिगंतरं येन स इति चक्री अखंडाज्ञावान् भवति, विपाकपाकेन, तत्र नाश्चर्यं दुर्लभं हि सम्यग्दर्शनज्ञानचारित्रं, शुद्धात्मधर्मम् ॥ ३ ॥

**विषमा कर्मणः सृष्टिर्दृष्टा करभपृष्ठवत् । जात्यादिभूतिवैषम्यात्का रतिस्तत्र योगिनः ॥ ४ ॥**

व्या० विषमा कर्मण इति कर्मणः "सृष्टिः" रचना करभपृष्ठवत् विषमा दृष्टा, कस्मात् ?—जात्यादिभूतिवैपम्यात् जातिः कुलं—उच्चनीचादिसंस्थानवर्णस्वरसंपदादिभेदात् तस्य महत् वैपम्यं तस्मात् । उक्तं च प्रशमरतौ—

"जातिकुलदेहविज्ञानायुर्बलभोगभूतिवैषम्यम् । दृष्ट्वा कथमिह विदुषां, भवसंसारे रतिर्भवति ? ॥ १ ॥"

इति । 'तत्र' शुभोदये ऐश्वर्यादिकाले अनेकाशुद्धाध्यवसाये परसंयोगोत्पत्तिरूपे, 'योगिनः' रत्नत्रयीपरिणतस्य का रतिः ? न कापि । उक्तं च—

सुहजोगो रईहेऊ, असुहजोगो अरईहेउत्ति । रागो वड्ढई तेणं, अवरो दोसं विवड्ढेई ॥ १ ॥

सिवमग्गविग्घभूया, कम्मविवागा चरित्तबाहकरा। धीराणं समया तहिँ, चायपरिणामओ हवई ॥ २ ॥ ४ ॥

कर्मस्वरूपस्य मोक्षमार्गध्वंसित्वं दर्शयति—

**आरूढाः प्रशमश्रेणिं, श्रुतकेवलिनोऽपि च । भ्राम्यंतेऽनंतसंसारमहो दुष्टेन कर्मणा ॥ ५ ॥**

व्या० आरूढा इति केचित् मुनयः निश्चयरत्नत्रयीपरिणामतः तीव्रक्षयोपशमभावावाप्तसाधनाः अपूर्वकरणबलेन उपशमचारित्रपरिणतिं आरूढाः सर्वथा मोहोदयरहिताः, च पुनः श्रुतकेवलिनः अपि 'दुष्टेन कर्मणा' सत्तागतेन मोहेन उदयावस्थायोग्यभूतेन, अथवा आयुःकर्मप्रांतकरणेन प्रतिपातमापन्नाः अहो ! अनंतसंसारं भ्राम्यंते ते चतुर्गतिषु भ्रमंति, अतः कर्मायत्ता चेतना न करणीया, विपाककाले स्वकीयक्षयोपशमःस्वरूपानुयायी रक्षणीयः, नहि विपाकः प्रतिपाताभिनवकर्मबंधहेतुः किंतु स्वकीयचेतना वीर्यं च मोहोदयानुगतत्वेन हेतुत्वपरिणत्या बंधः, अतः हेतोः वारणीया, तदा च परकृतैव कर्मकर्तृता आत्मशक्तेः अप्रवर्त्तमानत्वात्, न ह्यप्रवृत्ता शक्तिः कर्मकर्त्री, तेन नोदनाहेतुता, किंतु मिथ्यात्वादिहेतुभिरुदयभूतैः सम्यक्त्वादयो गुणा आच्छादिताः, पुनः चेतनावीर्यदानादयः क्षायोपशमिकदुर्विपरीतश्रद्धानभासनपररमणिकपरिणताभिनवकर्महेतुतामास्कंदंति, अतः अशुद्धतया परिणमितात्मापरिणतिरभिनवकर्महेतुः, निदर्शनं च सूक्ष्मैकेंद्रियाणां तु अशुद्धानुगक्षयोपशमबाहुल्येन तीव्रबंधकता इत्यादि भाव्यं, उक्तं च—"अप्पा करेइ कम्माइं अप्पा वेएई परवसो एसो" इत्यादि । तथा च भगवतीप्रज्ञापनादौ—"अत्तकडा कम्मा बंधन्ति नो परकडा अप्पवगाढा नाप्प

नवगाढा" उत्तराध्ययने—"अत्ता कत्ता विकत्ता य सुहाण दुहाण य" इत्यादि । पुनः आचारांगे—"आयाणां सगडब्भि" इत्यादि स्वतः योज्यं, श्रेणिप्रतिपाताधिकारे आवश्यकनिर्युक्तौ—

उवसामं उवणीया, गुणमहया जिणचरित्तसरिसंपि । पडिवायंति कसाया, किं पुण सेसे सरागत्थे ॥ १ ॥
जइ उवसंतकसाओ, लहई अणंतं पुणोवि पडिवायं । नहु भे वीससियव्वं थोवेवि कसायसेसंमि ॥ २ ॥
अणथोवं वणथोवं, अग्गीथोवं कसायथोवं च । न हु भे वीससिअव्वं, थोवंपिहु तं बहू होइ ॥ ३ ॥
दासत्तं देइ रिणं अइरा मरणं वणो विसप्पंतो । सव्वस्सदाहमग्गी दिंति कसाया भवमणंता ॥ ४ ॥
इति कर्मोदयेन आत्मा दीनो भवति, इति ॥ ५ ॥

अर्वाक् सर्वापि सामग्री, श्रांतैव परितिष्ठति । विपाकः कर्मणः कार्यपर्यंतमनुधावति ॥ ६ ॥

व्या० अर्वाक् सर्वेति—सर्वापि सामग्री अर्वाक् श्रांता एव परितिष्ठति, नहि कार्यकरणसमर्था, कर्मणः विपाकः 'उदयकार्यपर्यंतं' चरमकारणं 'अनुधावति' अनुप्रवर्त्तते, अतः बाह्यसामग्री उपकरणरूपा हि कर्मोदयाश्रिता, तेन कर्मोदयः बलवत्तरः, अतः कर्मक्षयाय यतितव्यमिति ॥ ६ ॥

असावचरमावर्त्ते, धर्मं हरति पश्यतः । चरमावर्त्तिसाधोस्तु, च्छलमन्विष्य हृष्यति ॥ ७ ॥

व्या० असाविति "असौ" कर्मविपाकः "पश्यतः" पश्यत एव 'अचरमावर्त्ते' चरमपुद्गलपरावर्त्तादर्वाक् धर्मं 'हरति' चोरयति, तु पुनः 'चरमावर्त्ति' चरमपुद्गलपरावर्त्तान्तरवर्त्तमानमार्गानुसारि, यस्य साधोः-निर्ग्रंथस्य छलं अन्विष्य गवेष-

यित्वा 'हृष्यति' हर्षं प्राप्नोति इत्यनेन मार्गानुसारिनिर्ग्रंथस्य क्षायोपशमिकगुणवत्वात् प्रमादादिदोषात्, शंकाद्यतिचारावसरे हृष्यति, नाम वर्त्तते इत्युपचारः, अतः कर्मविपाके रक्तद्विष्टता न करणीया ॥ ७ ॥

**साम्यं बिभर्त्ति यः कर्म–विपाकं हृदि चिंतयन् । स एव स्याच्चिदानंद–मकरंदमधुव्रतः ॥ ८ ॥**

इति कर्मविपाकध्यानाष्टकम् ॥ २१ ॥

---

व्या० साम्यमिति यः आत्मार्थी 'कर्मविपाकं' शुभाशुभविपाकं चिंतयन्, 'हृदि' चित्ते 'साम्यं' तुल्यत्वं इष्टानिष्टतारहितं बिभार्त्ति, स एव योगी चिदानंदमकरंदमधुव्रतः, ज्ञानानंदस्य मकरंदः–रहस्यं तस्य मधुव्रतः–रसास्वादी 'स्यात्' भवति, आत्मानंदभोगी भवति, इत्यनेन आत्मानंदरसरसिकः शुभाशुभविपाकोदयेन रागद्वेषवान् भवति, सर्वान् प्रति समवृत्तिः मुनिः इत्येवं कर्मविपाके समानत्वचिंतनाष्टकं समाप्तं ॥ ८ ॥

इति कर्मविपाकध्यानाष्टकम् व्याख्यातं ॥ २१ ॥

## अथ भवोद्वेगाष्टकम् ॥ २२ ॥

कर्मविपाकोद्विग्नभावात् संसारात् उद्विजति, अतः भवोद्वेगाष्टकं लिख्यते, तत्र नामभवः रुद्रादिः, अथवा—तन्नाम सर्वोल्लापरूपं, स्थापनाभवः लोकाकाशः तदाकारो वा, द्रव्यभवः भवभ्रमणे हेतुरूपधनस्वजनादिः, भावभवः चतुर्गतिरूपः जन्ममरणादिलक्षणः, नयस्वरूपं च—द्रव्यनिक्षेपे यावत् नयचतुष्टयं, भावनिक्षेपे शब्दादिनयत्रयं ज्ञेयं ।

अत्र च भवमग्नानां जीवानां न धर्मेच्छा, इंद्रियसुखास्वादलीना मत्ता इव निर्विवेका भ्रमंति, दुःखोद्विग्ना इतस्ततः दुःखापनोदार्थं, अनेकोपायचिंतनव्याकुला भ्रमंति शूकरा इव, इति महामोघभवांभोधौ किमन्यत् सर्वसिद्धिकरं श्रीमद्वीतरागवंदनादिकं कुर्वंति, इंद्रियसुखार्थं च तपउपवासनादिकष्टानुष्ठानमाजन्मकृतं हारयंति निदानदोषेण, गणयंति मोहहेतुरूपजैनशासनदेवादि सुखहेतुरूपं, व्यामुह्यंति ऐश्वर्यादिषु भवाब्धिमत्स्या इव मिथ्यावासिता जीवाः, तेन भवोद्वेग एव करणीयः, यत्रात्मसुखहानिः तस्य कोऽभिलाषः सतामिति ? इत्येवोपदिशति—

यस्य गंभीरमध्यस्याऽज्ञानवज्रमयं तलम् । रुद्धा व्यसनशैलौघैः, पंथानो यत्र दुर्गमाः ॥ १ ॥
पातालकलशा यत्र, भृताः तृष्णामहानिलैः । कषायाश्चित्तसंकल्पवेलावृद्धिं वितन्वते ॥ २ ॥
स्मरौर्वाग्निर्ज्वलत्यंतर्यत्र स्नेहेंधनः सदा । यो घोररोगशोकादिमत्स्यकच्छपसंकुलः ॥ ३ ॥
दुर्बुद्धिमत्सरद्रोहैर्विद्युद्दुर्वातगर्जितैः । यत्र सांयात्रिका लोकाः, पतंत्युत्पातसंकटे ॥ ४ ॥
ज्ञानी तस्माद्भवांभोधेर्नित्योद्विग्नोऽतिदारुणात् । तस्य संतरणोपायं, सर्वयत्नेन कांक्षति ॥ ५ ॥

यस्येति १ पातालेति २ स्मरौर्वेति ३ दुर्बुद्धीति ४ ज्ञानीति ५ श्लोकपंचकं व्याख्यायते । ज्ञानी तस्य भवसमुद्रस्य संतरणोपायं पारगमनोपायं सर्वयत्नेन 'कांक्षति' इच्छति इत्यर्थः, तस्य कस्य ? यस्य गंभीरं मध्यं यस्य गंभीरमध्यस्तस्य अप्राप्तमध्यस्य भवार्ण-

वस्य अज्ञानं जीवाजीवविवेकरहितं तत्त्वबोधशून्यं मिथ्याज्ञानं, तदेव वज्रमयं तलं दुर्भेदं यत्र भवांभोधौ, व्यसनशैलौघैः कष्टपर्वतसमूहैः रुद्धाः पंथानः-मार्गाः सद्गतिगमनप्रचाराः दुर्गमा—गंतुमशक्या भवंति,इत्यनेन अज्ञानतलातिगंभीरमध्यस्य संसारपारावारस्य रोगशोकवियोगादिकष्टपर्वतैः रुद्धमार्गस्य जंतोः सह गमनमशक्यं भवति । पुनः यत्र भवसमुद्रे कषायाः—क्रोधमानमायालोभरूपा पातालकलशाः तृष्णा विषयपिपासा तद्रूपैः महानिलैः भृताः, चित्तं-मनः तस्य संकल्पाः अनेकजलसमूहाः तद्रूपा वेला-जलप्रवाहरूपा तस्याः वृद्धिं वेलागमनं 'वितन्वते,' विस्तारयंति, इत्यनेन कषायोदयात् तृष्णावातप्रेरणया विकल्पवेलां वर्द्धयंति, भवजलधौ संसारांबुधौ इति ॥ २ ॥ यत्र जन्ममरणसमुद्रे स्मरः—कंदर्पः तद्रूपः अंतर्मध्ये और्वाग्निः—वाडवानलः ज्वलति, यत्राग्नौ स्नेहेंधनः स्नेहो—रागः स एव इंधनं—ज्वलनयोग्यकाष्ठसमूहः यस्मिन् अन्यत्र वडवाग्नौ जलेंधनं इति, किंभूतः रागः ? यः रागः घोररोगशोकादयो मत्स्यकच्छपाः तैः संकुलः व्याप्त, इत्यनेन रागाग्निप्रज्वलनरोगशोकतापितप्राणिगणः एवंरूपो भवाब्धिः पुनः यत्र सांयात्रिकाः—प्रवहणस्थाः लोकाः, अत्रापि व्रतनियमादिपोतस्था जीवाः उत्पातसंकटे कष्टे पतंति, कैः ? दुष्टा बुद्धिः मत्सरः असहनसंयुक्ताहंकारः, द्रोहः कापट्यं इत्यादयः एव विद्युद्दुर्वातगर्जितानि तैः दुर्बुद्धिविद्युता मत्सरदुर्वातेन द्रोहगर्जितेन व्रतादिपोताः प्रवर्त्तमाना अपि पंकस्खलनाद्युत्पातान् लभंते, इत्यनेन महाभववारिधौ एते महाव्याघाताः सन्मार्गप्राप्तौ तस्मात् अतिदारुणात् महाभयात् नित्योद्विग्नः सदोदासीनः तस्य संतरणोपायं सम्यग्ज्ञानदर्शनचारित्ररूपं कांक्षति—अभिलषति, इति तीव्रभवभीत इव तिष्ठति, चिंतयति च—मम शुद्धज्ञानमयस्य, परमतत्त्वरमणचारित्रपवित्रस्य, रागद्वेषक्षयसमुत्थपरमशमशीतलस्य, अनंतानंदसुखमग्नस्य, सर्वज्ञस्य,

परमदक्षस्य, शरीराहारसंगमुक्तस्यामूर्त्तस्य, कथं शरीरादिन्यसनसमूहभारभुग्नता भुग्नस्वशक्तिवत्त्वं युज्यते ? नाहं सशरीरा सपुद्गला सकर्मा सजन्ममरणा चेतना मम कथमयं महामोहावर्त्तः ? इत्युद्विग्नाः स्वरूपभासनरमणैकत्वमनोहरं, सम्यग्दर्शनप्रतिष्ठानं क्षांत्यादिधर्माष्टादशशीलांगसहस्रविचित्रफलकनिविडघटनाविराजितं, सम्यग्ज्ञाननिर्यामकान्वितं, सुसाधुसंसर्गकाथसूत्रनिविडबंधनबद्धं, संवरकीलप्रभग्ननिःशेषाश्रवद्वारं, सूत्रितसामायिकच्छेदोपस्थापनीयभेदविभिन्नरम्यभूमिकाढ्यं, तदुपकल्पितसाधुसमाचारकरणमंडपं, समंततो गुप्तित्रयप्रस्तरगुप्तं, असंख्यशुभाध्यवसायसन्नद्धदुर्योधं, योधसहस्रदुरवलोकं, सर्वतो निवेशितसद्गुरूपदेशवल्लीनिकुरुंबमध्यमव्यवस्थापितस्थिरतरानिशलसद्बोधकूपस्तंभतद्विन्यस्तप्रकृष्टशुभाध्यवसायसितपटं, तदग्रसमारूढप्रौढसदुपयोगपंजरदौवारिकं, तदवबद्धाप्रमादनगरनिकरसमायुक्तसर्वांगसंपूर्णतया प्रवहणं चारित्रयानपात्रं तेन चारित्रमहायानपात्रेण संतरणोपायं कुर्वंति ॥ ५ ॥

तैलपात्रधरो यद्वत् , राधावेधोद्यतो यथा । क्रियास्वनन्यचित्तः स्याद् , भवभीतस्तथा मुनिः ॥ ६ ॥

व्या० तैलपात्रधर इति—यथा तैलपात्रधरः मरणभयभीतः अप्रमत्तः तिष्ठति, तथा मुनिः स्वगुणघातभयभीतः संसारे अप्रमत्तस्तिष्ठति । यथा केनचित् राज्ञा कंचन पुरुषं लक्षणोपेतं वधाय अनुज्ञापितं, तदा सभाजनैः विज्ञप्तः स्वामिन् क्षमध्वमपराधं, मा मारय एनं, तेन सभ्योक्तेन राज्ञा निवेदितं, यदा महास्थालं तैलपूर्णं सर्वनगरचतुष्पथे अनेक नाटकवाद्यतूर्याकुले तैलबिंदुमपतंतं सर्वतो भ्रामयित्वा आयाति तदा न मारयामि, यदि च तैलबिंदुपातः तदास्य तस्मिन्नवसरे प्राणापहारः करणीय, इत्युक्तोऽपि स पुरुषस्तत्कार्यं स्वीचकार तथैवानेकजनसंकुले मार्गे तैलस्थालं शिरसि

धृत्वा सापेक्षयोगः अपतिततैलबिंदुः समागतः । तद्वन्मुनिः अनेकसुखदुःखव्याकुले भवेऽपि स्वसिध्ध्यर्थं प्रमादरहितः प्रवर्त्तते, पुनः दृष्टांतयति, यथा—स्वयंवरे कन्यापरिणयनार्थं राधावेधोद्यतः स्थिरोपयोगयोगतया लघुतालाघविकः स्थिरचित्तः भवति, तथा मुनिः भवभीतः संसारसंसरणगुणावरणादिमहादुःखाद् भीतः क्रियासु समितिगुप्तिकरण सप्ततिकरणरूपासु अनन्यचित्तः भवति, न अन्यत्र अपरभावे चित्तं मनो यस्य स अनन्यचित्तः स्यात् एकाग्रमानसः भवति उक्तं च ।

गाईज्जंति सुरसुंदरीहिं, वाइज्जंतावि वीणमाइहिं । तहविहुसमसत्ता वा, चिट्ठंति मुणी महाभागा ॥ १ ॥

पवसिलायलगया, भावसिएहिं कडुअफासेहिं । उज्जलवेयणपत्ता, समचित्ता हुंति निग्गंथा ॥ २ ॥

अमिसलुद्धेणवणे, सीहेण यदाढवक्कसंगहिआ । तहवि हु समाहिपत्ता, संवरजुत्ता मुणिवरिंदा ॥ ३ ॥ ६ ॥

कथमीदृग्विपाके निर्भया निर्ग्रंथाः ? इत्युपदिशन्नाह ।

**विषं विषस्य वह्निश्च, वह्नेरेव यदौषधम् । तत्सत्यं भवभीतानामुपसर्गेऽपि यन्न भीः ॥ ७ ॥**

व्या० विषं विषस्य इति यथा—कश्चित् विपयार्त्तः विपस्य औषधं विषमेव करोति, यथा—सर्पदष्टः निंबादिचर्वणेन विभेसति अथवा—कश्चित् अग्निदग्धः पुनरपि अग्निदाहपीडावारणाय पुनः अग्नितापं अंगीकरोति, इति तत्सत्यंयत् यस्मात्कारणात् भवभीतानां मुनीनां उपसर्गेऽपि भयं न, कर्मक्षपणोद्यतस्य उपसर्गे बहुकर्मक्षपणत्वं मन्वानः साधुः तदुपचयं विदन् न भयवान् भवति, साध्यकार्यस्य निष्पद्यमानत्वात् इति ॥ ७ ॥

स्थैर्यं भवभयादेव, व्यवहारे मुनिर्व्रजेत् । स्वात्मारामसमाधौ तु तदप्यंतर्निमज्जति ॥ ८ ॥

इति भवोद्वेगाष्टकम् ॥ २२ ॥

व्या० स्थैर्यं भवेति—मुनिः तत्वज्ञानी 'भवभयात्' नरकनिगोददुःखोद्वेगात् एव व्यवहारे एषणादिक्रियाप्रवृत्तौ स्थैर्यं व्रजेत् गच्छेत्, लभेत स्वात्मारामसमाधौ स्वकीयात्मारामः स्वचेतनः, तस्य समाधौ ज्ञानानंदादिषु तद् भवभयं अंतर्मध्ये निमज्जति लयीभवति, स्वएव विनश्यति आत्मध्यानलीलालीनानां सुखदुःखे समानावस्थानां भयाभाव एव भवति, इत्यनेन संसारोद्विग्नः प्रथमज्ञानदर्शनचारित्राचाराभ्यासतो दृढीकृतयोगोपयोगः स्वरूपानंतस्याद्वादतत्वैकत्वसमाधिस्थः सर्वत्र समावस्थो भवति, "मोक्षे भवे च सर्वत्र निःस्पृहो मुनिसत्तमः" इति एवं स्वरूपलीनसमाधिमग्नानां निर्भयत्वं इति वस्तुस्वरूपावधारणेन विभावोत्पन्नकर्मोदयलक्षणे संसारे परसंयोगसंभवे आत्मसत्ताभिन्ने निर्वेदः कार्यः ॥ ८ ॥

इति व्याख्यातं भवोद्वेगाष्टकम् ॥ २२ ॥

## अथ लोकसंज्ञात्यागाष्टकम् ॥ २३ ॥

अथ निर्वेदी जीवः मोक्षसाधनोद्यमवर्त्ती लोकसंज्ञायां न मुह्यति, लोकसंज्ञा हि धर्मसाधनव्याघातकरा आशैस्त्याज्या, इति तदुपदेशरूपं लोकसंज्ञात्यागाष्टकं विस्तार्यते । लोकः सप्तविधः—नामलोकः शब्दालापरूपः, स्थापनालोकः अक्षरः लोकनालियंत्रन्यासरूपः, रूप्यजीवाजीवात्मकः द्रव्यलोकः, ऊर्ध्वाधस्तिर्यग्लक्षणः क्षेत्रलोकः, समयावल्यादिकालपरिमाणलक्षणः काललोकः नरनारकादिचतुर्गतिरूपः भवलोकः, औदयिकादिभावपरि (णामः) भावलोकः, द्रव्यगुणपर्यायप-

रिणमनरूपः पर्यवलोकः, इदं च सर्वमपि आवश्यकनिर्युक्तितः ज्ञेयं । अथवा—द्रव्यलोकः संसाररूपः अप्रशस्तभावलोकः परभावैकत्वजीवसमूहः, अत्र भवलोकाप्रशस्तभावलोकस्य संज्ञा त्याज्या, लोकसंज्ञा च नयसप्तकेन धर्मार्थिभिः परिहरणीया ।

**प्राप्तः षष्ठं गुणस्थानं, भवदुर्गाद्रिलंघनम् । लोकसंज्ञारतो न स्यान्मुनिर्लोकोत्तरस्थितिः ॥ १ ॥**

व्या० प्राप्त इति—'मुनिः' संयमो आश्रवविरतः 'षष्ठं' सर्वविरतिलक्षणं प्रमत्ताख्यं प्राप्तः 'लोकसंज्ञा' लोकैः कृतं तत्कर्त्तव्यं गतानुगतिकतानीतिरित्यत्र 'रतः' रागी गृहीतग्रहः न स्यात्, लोकैः कृतं तदेव करणीयं इति मतिं निवार्य आत्मसाधनोपायरतः स्यात्, किंभूतं षष्ठं गुणस्थानं ? भवः संसारः स एव दुर्गाद्रिः विषमपर्वतः तस्य लंघनं, किंविशिष्टः मुनिः ? लोकोत्तरस्थितिः लोकातीतमर्यादया स्थितः, लोको हि विषयाभिलाषी, मुनिः निष्कामः, लोकः पुद्गलसंपत् ज्येष्ठत्वमानी, मुनिर्ज्ञानादिसंपदा श्रेष्ठः, अतः किल लोकसंज्ञया किं तेषां ॥ १ ॥

**तथा चिंतामणिं दत्ते, बठरो बदरीफलैः । हहा जहाति सद्धर्मं, तथैव जनरंजनैः ॥ २ ॥**

व्या० यथा चिंतामणिमिति—'यथा' येन प्रकारेण कश्चित् 'बठरः' मूर्खः बदरीफलैः चिंतामणिं दत्ते, तथैव मूढः 'जनरंजनैः' लोकश्लाघाभिलाषैः सद्धर्मं द्रव्याचरणतत्वानुभवलक्षणं 'हहा' इति खेदे 'जहाति' त्यजति, इत्यनेन जिनभक्ति श्रुतश्रवणाहारत्यागादिकं यशः पूजादिना हारयंति । उक्तं च ।

त्वत्तः सुदुःप्रापमिदं मयाप्तं, रत्नत्रयं भूरिभवभ्रमेण । प्रमादनिद्रावशतो गतं तत्कस्याग्रतो नायक ! पूत्करोमि ॥ १ ॥
वैराग्यरंगः परवंचनाय, धर्मोपदेशो जनरंजनाय । वादाय विद्याध्ययनं च मेऽभूत्कियद् ब्रुवे हास्यकरं स्वमीश ॥ २ ॥

**लोकसंज्ञामहानद्यामनुस्रोतोनुगा न के । प्रतिस्रोतोऽनुगस्त्वेको, राजहंसो महामुनिः ॥ ३ ॥**

व्या० लोकसंज्ञेति—'लोकसंज्ञा' लोकरीतिरूपा महानदी, तस्याः 'अनुस्रोतः' प्रवाहः तस्य 'अनुगाः' अनुयायिनः के न भवंति ? अनेके इत्यर्थः तत्र प्रतिस्रोतानुगः सन्मुखप्रवाहचातुर्यी तु एक एव महामुनिः शुद्धश्रमणः राजहंसनामा इति, तेन लोकरूढिरूढा बहवो जीवाः निर्ग्रंथः स्फुरद्रत्नत्रयसाधनोद्यतः स एव स्वरूपानुगामी । उक्तं च दशवैकालिके ।

अणुसोयपिठिए बहुजणंमि पडिसोयलद्धलक्खेणं । पडिसोयमेव अप्पा, दायव्वो होउ कामेण ॥ १ ॥

अणुसोयसुहो लोगो, पडिसोओ आसमो सुविहयाणं । अणुसोउ संसारो पडिसोउ तस्सउत्तारो ॥ २ ॥

तेन मुनिर्लोकसंज्ञानुयायी न स्यात् ॥ ३ ॥

**लोकमालंब्य कर्त्तव्यं, कृतं बहुभिरेव चेत् । तदा मिथ्यादृशां धर्मो, न त्याज्यः स्यात्कदाचन ॥ ४ ॥**

लोकमिति—चेत् यदि यत् बहुभिः कृतं तत् कर्त्तव्यं लोकं आलंब्य एवं क्रियते तदा मिथ्यादृशां धर्मः कदाचन कदापि न त्याज्यः स्यात्, तच्च बहुभिः क्रियमाणत्वात् स्वेच्छाचरणो लोकः बहुतरः, यतः अनार्येभ्यः आर्याः स्तोकाः, आर्येभ्यः जैनाचाराः स्तोकाः जैनाचारवर्त्तिषु जैनपरिणतिपरिणताः स्तोकाः, अतः बहुलोकानुयायिना न्नवनीयमिति ॥ ४ ॥

**श्रेयोऽर्थिनो हि भूयांसो, लोके लोकोत्तरे न च । स्तोका हि रत्नवणिजः, स्तोकाश्च स्वात्मसाधकाः ॥ ५ ॥**

व्या० श्रेयोऽर्थिनो हि भूयांस इति—'लोके' बाह्यप्रवाहे 'श्रेयोऽर्थिनः' धनस्वजनभुवनवनतनुकल्पार्थिनः 'भूयांसः'

प्रचुराः संति, च पुनः 'लोकोत्तरे' अमूर्त्तात्मस्वभावाविर्भावलक्षणे प्रवर्त्तमानाः 'नच' नैवेति 'हीति' निश्चितं रत्नवणिजः स्तोका, तथा 'च' पुनः 'स्वात्मसाधकाः' स्व आत्मा तस्य साधकाः निरावरणत्वनिष्पादकाः स्तोका इति ॥ ५ ॥

**लोकसंज्ञाहता हंत ! ! नीचैर्गमनदर्शनैः । शंसयंति स्वसत्यागममर्मघातमहाव्यथाम् ॥ ६ ॥**

व्या० लोकसंज्ञेति—'हंत' इति खेदे, 'लोकसंज्ञाहता' लोकसंज्ञाव्याकुलाः 'नीचैर्गमनदर्शनैः' वक्रीभूतशरीरभून्यस्त दृष्ट्या गमनस्य दर्शनैः, 'स्वसत्यागममर्मघातमहाव्यथां स्वीयो यः सत्त्यागः जैनवृत्तित्यागः स च लोकरंजनाध्यवसायवहुलेन मर्मणि घातं लभते, तस्य घातस्य महाव्यथां महापीडां शंसयंति ज्ञापयंति, 'वयं पीडितेन वक्रशरीरा भ्रमामः' इति शंसयंति कथयंति वेति उत्प्रेक्षा, लोकोक्तिभीतित्यागवंतो जीवा आत्मस्वरूपघातका, इति ॥ ६ ॥

**आत्मसाक्षिकसद्धर्म–सिद्धौ किं लोकयात्रया ? । तत्र प्रसन्नचंद्रश्च, भरतश्च निदर्शनम् ॥ ७ ॥**

व्या० आत्मेति—हे उत्तम 'आत्मसाक्षिकः' आत्मा एव साक्षिकः आत्मसाक्षिकः, स चासौ 'सत्' शोभनः धर्मः, तस्य 'सिद्धौ' निष्पत्तौ लोकयात्रया किं ? न किमपि, लोकानां ज्ञापनेन किमित्यर्थः, तत्र प्रसन्नचंद्रः चपुनः भरत इति निदर्शनं दृष्टांतः सति द्रव्यलिंगे कायोत्सर्गे प्रसन्नचंद्रस्य नरकगतिवंधः, असति लिंगे मोहकलाकेलिभूतवनिताव्यूहपरिवृतोऽपि भरतः संप्राप्तात्मसाक्षिकत्वैकत्वरूपधर्मपरिणतः केवलं प्राप, इति आत्मसाक्षिको धर्म–धर्म इति दृष्टांतः, अतः आत्मसाक्षिक एव धर्मः करणीय इति ॥ ७ ॥

लोकसंज्ञोज्झितः साधुः, परब्रह्मसमाधिमान् । सुखमास्ते गतद्रोह–ममतामत्सरज्वरः ॥ ८ ॥

इति लोकसंज्ञात्यागाष्टकम् ॥ २३ ॥

व्या० लोकेति—'साधु' परमात्मसाधनोद्यतः, सुखं 'आस्ते' तिष्ठति, कथंभूतः साधुः ? 'लोकसंज्ञोज्झितः' लोकसंज्ञारहितः, पुनः किंभूतः ? परब्रह्मणः शुद्धात्मस्वरूपस्य 'समाधिः स्वास्थ्यं तद्वान् तन्मयः, आत्मज्ञानानंदमग्नः पुनः कथंभूतः ? 'गतः' नष्टः 'द्रोहः' मोषणशीलता ममता परभावेषु ममकारता, 'मत्सरः' अहंकारः एव ज्वरः तापो यस्य स, इत्यनेन कषायकालुष्यरहितः 'स्वात्मारामः' स्वात्मज्ञानी तत्वानुभवयुक्तः मुनिः सुखं तिष्ठति । लोकसंज्ञात्यागेन स्वरूपयोगभोगसुखमग्ना निर्ग्रंथाः औदयिकं इंद्रियसुखं दह्यमानस्वगृहप्रकाशवत् मन्यंते न सुखमस्ति ॥ ८ ॥

इति व्याख्यातं लोकसंज्ञात्यागाष्टकम् ॥ २३ ॥

## अथ शास्त्राष्टकम् ॥ २४ ॥

अथ क्रमायातं यथार्थोपयोगकारणभूतं शास्त्राष्टकं प्ररूप्यते, तत्र शास्त्रस्वरूपं ऐकांतिकात्यंतिकनिर्द्वंद्वनिरामयपरमात्मपदसाधनस्याद्वादपद्धत्या यत्र शास्यते तत्र शास्त्रं शासनं, न भारतरामायणादयः इहलोकशिक्षारूपाः शास्त्रव्यपदेशं लभंते तथा—जैनागममपि सम्यग्दृष्टिपरिणतस्य शुद्धवक्तुरेव मोक्षकारणं, मिथ्यात्वोपहतानां तु भवहेतुरेव । उक्तं च—नंदीसूत्रे तच्चैवं—"दुवालसंगं गणिपिंडगं सम्मत्तपरिग्गाहिअं सम्मसुअं, मिच्छत्तपरिग्गहि अंमिच्छसुअं" ॥ तथा च पूज्यैः ।

सदसदविसेसणाओ, भवहेउजहट्ठिओवलंभाओ । नाणफलाभावाओ, मिच्छादिट्ठिस्स अन्नाणं ॥ १ ॥

इत्यादिजीवाजीवादिगुणपर्यायविभजनसर्वाश्रवत्यागकर्त्तुरपि तन्नैश्चयिकश्रद्धाकृतेन सम्यग्दर्शनं, तेन यथार्थस्वपरविभागविभक्तस्वरूपोपादेयत्वपरिहेयत्वविज्ञानपूर्वकनिमित्तोपादानकारणनिर्द्धारशुद्धाविनश्वरस्वसिद्धपरिणतौ धर्मत्वप्रतीतिः सम्यग्दर्शनं इत्येवं सम्यग्दर्शनयुक्तस्य रुचिकृतपरमात्मभावस्य तत्साधनोपायानवच्छिन्नकथनं शास्त्रं, तच्च नामादिभेदतः, नामतः आचारांगादि । स्थापनातः सिद्धचक्रादौ स्थापितं श्रुतज्ञानं । द्रव्यतः पुस्तकन्यस्तं, अथवा—अनुपयुक्तपुरुषस्य क्षयोपशमगतं जैनागमं । नयविचारे तु—नैगमेन वचनोल्लापव्यंजनाक्षरादिकं, संग्रहतः जीवपुद्गलौ—द्रव्येंद्रियभावेंद्रिये शास्त्रं तद्धेतुत्वात्, व्यवहारतः पठनपाठनश्रवणात्मकं, ऋजुसूत्रतः मननिदिध्यासनरूपं, शब्दतः तत् श्रुताधारात्मस्पर्शज्ञानपरिणामलक्षणं, भावक्षयोपमोपयुक्तस्य, समभिरूढतः तन्मयस्य सर्वाक्षरलब्धिवतः शुद्धोपयोगं, एवंभूततः सर्वाक्षरसंपन्नस्य, निर्विकल्पोपयोगकाले उत्सर्गभावशास्त्रपरिणमनोपयुक्तत्वात् इति । अतः परमकारुणिकोपदिष्टं शास्त्रं हितं, उक्तं च तत्वार्थभाष्ये—

एकमपि जिनवचनादस्मान्निर्वाहकं पदं भवति । श्रूयंते चानंता सामायिकमात्रपदसिद्धाः ॥ १ ॥
तस्मात्तत्प्रामाण्यात्समासतो व्यासतश्च जिनवचनम् । श्रेय इति निर्विकारं ग्राह्यं धार्यं च वाच्यं च ॥ २ ॥
न भवति धर्मः श्रोतुः, सर्वस्यैकांततो हितश्रवणात् । ब्रुवतोऽनुग्रहबुध्या, वक्तुस्त्वेकांततो भवति ॥ ३ ॥
श्रममचिंत्यात्मगतं तस्मात् श्रेयः सदोपदेष्टव्यम् । आत्मानं च परंच हितोपदेष्टानुगृह्णाति ॥ ४ ॥

इति । अत एव शास्त्रादरोत्पादनार्थमुपदिशति—

चर्मचक्षुर्भृतः सर्वे, देवाश्चावधिचक्षुषः । सर्वतश्चक्षुषः सिद्धाः, साधवः शास्त्रचक्षुषः ॥ १ ॥

व्या० चर्मचक्षुर्भृत इति—'सर्वे' तिर्यग्मनुष्याः चर्मचक्षुर्भृतः, मतिश्रुतज्ञानावरणीयचक्षुर्दर्शनावरणीयवीर्यांतराय-क्षयोपशममूलजातिनामकर्मपर्याप्तिनामकर्मशरीरनामकर्मनिर्माणनामकर्मोदयजन्यचक्षुर्भृतः तद्धराः, च पुनः 'देवाः' सुरा अवधिचक्षुषः अवधिज्ञानावरणीयावधिदर्शनावरणीयक्षयोपशमसमुत्थज्ञानदृष्टयः, सिद्धाः सर्वचक्षुर्धराः सर्वप्रदेशकेवलो-पयोगमयाः, 'साधवः' निर्ग्रंथाः, शास्त्रचक्षुषः शास्त्रावलंबिविज्ञानधराः । उक्तंच ।

आगमचक्खू साहू, चम्मचक्खूणि सव्वभूआणि । देवा य ओही चक्खु, सिद्धा पुण सव्वओ चक्खू ॥ १ ॥

अतः निर्ग्रंथानां वाचनादिस्वाध्यायमुख्यत्वं ॥ १ ॥

पुरःस्थितानिवोर्ध्वाधस्तिर्यक्लोकविवर्त्तिनः । सर्वान् भावानवेक्षन्ते, ज्ञानिनः शास्त्रचक्षुषा ॥ २ ॥

व्या० पुरःस्थितानिति—ज्ञानिनः' 'शास्त्रचक्षुषा' आगमोपयोगेन 'ऊर्ध्वाधस्तिर्यग्विवर्त्तिनः, त्रैलोक्यवर्तिनः 'भावान्' पदार्थस्वरूपान् 'सर्वान्' सूक्ष्मवादरान् सहजान् विभावजान् परोक्षानपि क्षेत्रांतरस्थानपि आगमबलेन पुरः स्थितानिव सन्मुखस्थानिव अवेक्षंते पश्यंति । अत्र दर्शनं मानसं श्रुतक्षयोपशमं ज्ञेयं ॥ २ ॥

शासनात् त्राणशक्तेश्च, बुधैः शास्त्रं निरुच्यते । वचनं वीतरागस्य, तत्तु नान्यस्य कस्यचित् ॥ ३ ॥

व्या० शासनादिति—'बुधैः' विद्वद्भिः च पुनः 'त्राणशक्तेः' भवभीतकर्मावगुंठितविभावभुग्नजीवानां त्राणं रक्षणं

तस्य शक्तिः सामर्थ्यं यस्य सः, तस्य शासनात् शिक्षणात् शास्त्रं निरुच्यते व्युत्पाद्यते, मोक्षमार्गस्य शासनात् शास्त्रं इति तत्वार्थकृत्, पुनः तत् वीरागस्य सर्वमोहक्षय निःपन्नपरमशमस्वभावस्य वचनं मोक्षमार्गोपिदेशक० । उक्तं च उमास्वातिपूज्यैः ।

केवलमधिगम्य विभुः, स्वयमेव ज्ञानदर्शनमनंतं । लोकहिताय कृतार्थोऽपि, देशयामास तीर्थमिदम् ॥ १ ॥

अतस्तस्यैव वचनं मोक्षांगं अन्यस्य कस्यचित् असर्वज्ञस्य सर्वज्ञमानिनः वचनं न मोक्षहेतुः ॥ ३ ॥

**शास्त्रे पुरस्कृते तस्माद्वीतरागः पुरस्कृतः । पुरस्कृते पुनस्तस्मिन्नियमात्सर्वसिद्धयः ॥ ४ ॥**

व्या० शास्त्रे पुर इति—तस्मात्कारणात् 'शास्त्रे' सिद्धांते 'पुरस्कृते' मुख्ये कृते 'वीतरागः अर्हन् 'पुरस्कृतः' अग्रेसरीकृतः, पुनः तस्मिन् वीतरागे पुरस्कृते 'नियमात्' निश्चयात् सर्वसिद्धयः भवंति । उक्तं च ।

अस्मिन् हृदयस्थे तिष्ठति तत्वतो मुनीन्द्र इति । हृदयस्थिते च तस्मिन् नियमात्सर्वार्थसिद्धिः (पुनः) ॥ १ ॥

पुनः आगमे—

आगमं आयरंतेण, अत्तणो हियकंखिणो । तित्थनाहो सयंबुद्धो, सव्वे ते वहुमन्निया ॥ १ ॥

अतः आगमादरी अर्हन् मुनिः संघादरवान् इति ॥ ४ ॥

**अदृष्टार्थे तु धावंतः, शास्त्रदीपं विना जडाः । प्राप्नुवंति परं खेदं, प्रस्खलंतः पदे पदे ॥ ५ ॥**

व्या० अदृष्टेति—जडाः मूर्खाः, 'शास्त्रदीपं विना आगमप्रकाशं विना 'अदृष्टे' अनुपलब्धे 'अर्थे' कार्ये संवरनिर्ज-

रामोक्षाभिधाने 'धावंतः' पदे पदे प्रस्खलंतः स्खलनां प्राप्नुवंतः 'परं' प्रकृष्टं 'खेदं' क्लेशं प्राप्नुवंति लभंते, अज्ञातशुद्धमार्गाः अनेकोपायप्रवृत्ता अपि स्खलनां लभंते इति ॥ ५ ॥

**शुद्धोञ्छाद्यपि शास्त्राज्ञा निरपेक्षस्य नो हितम् । भौतहंतुर्यथा तस्य, पदस्पर्शनिवारणम् ॥ ६ ॥**

व्या० शुद्धोच्छाद्यपि—'शास्त्राज्ञा निरपेक्षस्य' आगमोक्ताज्ञारहितस्य शुद्धोञ्छाद्यपि द्वाचत्वारिंशद्दोपरहिताहारग्राहकस्यापि नो 'हितं' न सुखकरं, यथा भौतहंतुः तस्य स्वगुरोः पदस्पर्शनिवारणमहितं, अत्र यथैकस्य शबरस्य जीवत् भौतपदस्पर्शनिवारणं स मयूरपिच्छार्थी भौतं हत्वा पश्चात् स्पर्शं चकार, तथा आत्मानं हत्वा षट्जीवनिकायान् रक्षन् तद्वत्करोति, अतः मौढ्यं निवार्य तत्वज्ञानवता भवनीयं, शुद्धहारादिकं तनुयोगः स्वरूपावलंबनं महदनुयोगः, इति तेन स्वरूपाचरणमंतरेणाहारस्कंधात्मसाधनवुद्धयः भौतहिंसकवत् ज्ञेयाः ॥ ६ ॥

**अज्ञानाहिमहामंत्रं, स्वाच्छंद्यज्वरलंघनम् । धर्मारामसुधाकुल्यां, शास्त्रमाहुर्महर्षयः ॥ ७ ॥**

व्या० अज्ञानाहीति—'महर्षयः' महामुनीश्वराः अज्ञानमेव 'अहिः' सर्पः तद्दमने महामंत्रं, च पुनः 'स्वाच्छंद्यं' स्वेच्छाचारित्वं तदेव ज्वरः तदपगमाय लंघनं 'धर्मारामसुधाकुल्यां' धर्म एव आरामः तस्मिन् 'सुधा' अमृतं तस्याः 'कुल्या नीकिः, तां अमृतं आहुः अमृतं शास्त्रं उक्तवंतः, अतः शास्त्राभ्यासः महासुखायेति ॥ ७ ॥

**शास्त्रोक्ताचारकर्त्ताच, शास्त्रज्ञः शास्त्रदेशकः । शास्त्रैकदृग् महायोगी, प्राप्नोति परमं पदम् ॥ ८ ॥**

इति शास्त्राष्टकम् ॥ २४ ॥

व्या० शास्त्रोक्तेति—एवंविधः महायोगी 'परमं' उत्कृष्टं पदं स्थानं प्राप्नोति, कथंभूतः 'शास्त्रोक्ताचारकर्त्ता, शास्त्रे जैनागमे उक्तः य आचारः तस्य कर्ता करणशीलः, 'शास्त्रज्ञः' शास्त्रं स्याद्वादागमं जानातीति शास्त्रज्ञः, पुनः 'शास्त्रदे० शास्त्रस्य देशकः कथकः पुनः कीदृशः ? शास्त्रे एका अद्वितीया रहस्यग्राहिणी दृग् दृष्टिर्यस्यस इति एवं शास्त्रोक्तमार्गकारी तत्त्वज्ञः तदुपदेशकः परमं उत्कृष्टं पदं प्राप्नोति, अतः सर्वादरेण जैनागमाभ्यासः करणीयः, येन तत्त्वावाप्तिः निखिलसिद्धिसाधकता, अतएव निर्ग्रंथाः वाचयंति प्रवचनं, प्रयच्छंति रहस्यं, परिवर्त्तयंति सूत्रालापकान्, अनुप्रेक्षयंति भावनया तदर्थं, तन्मयीभवंति आगमतत्वेषु, मग्नाश्चानंदयंति स्वात्मानं, तल्लाभलीलालालितचेतसः कुर्वंति धर्मकथां, अनुमोदयंति च महासूरिनिवहं, अतएव योगोपधानक्रियामारचयंति, वसंति यावज्जीवं गुरुकुले शास्त्रावबोधप्रवीणतामिच्छंतः ॥ ८ ॥

इति व्याख्यातं शास्त्राष्टकम् ॥ २४ ॥

## अथ परिग्रहाष्टकम् ॥ २५ ॥

परिग्रहग्रहगृहीतस्यानेकोपार्जनसंरक्षणगोपनाविकलचेतनावतः न शास्त्रज्ञानं सम्यग् भवति, अतः परिग्रहत्यागोपदेशमुपदिशति । तत्र परि—समंतात् ग्रहः ग्रहणरूपः परिग्रहः । तत्र द्रव्यतः धनधान्यादि, भावतः परवस्त्विच्छापरिणामः आशंसारूपः, तत्रात्मनः स्वपर्यायस्वामित्वपरिणतेः स्वपर्यायावरणे तदभावात्, अशुद्धबलवीर्यगृहीतकर्मविपाकेषु शुभेषु तद्धेतुषु प्रशस्तपरिणामेषु ममकारः परिग्रहः, स्वशुद्धसत्तागुणगणेभ्यः अन्यममकारस्वीकारसंरक्षणापरिणतिरूपा चेतनादिप्रवृत्तिः परिग्रहः, आत्मनः स्वस्वरूपभासनरमणानुभवव्याघातः । अतएव स त्याज्यः । द्रव्यपरिग्रहस्य भावपरिग्रहत्वं

संग्रहेण, भाष्ये च, "द्वितीयपंचमाश्रवौ सर्वद्रव्येषु" इति वाक्यात् व्यवहारपरिग्रहः धनादिकयुक्तः, ऋजुसूत्रेण तदभिलाषी, शब्दनयेन पुण्याशंसा इत्यादिना भावनीयं, अतः तदुपदेशः ।

न परावर्त्तते राशेर्वक्रतां जातु नोज्झति । परिग्रहग्रहः कोऽयं ? विडंबितजगत्त्रयः ॥ १ ॥

व्याख्या—न परावर्त्तते इति 'राशेः' अनादिराशितः परिग्रहो न 'परावर्त्तते' न निवर्त्तते, पुनः वक्रतां 'जातु' 'कदाचित्' न 'उज्झति,' न 'त्यजति, अतएव हे आत्मार्थिन् अयं दुःखमूलः परिग्रहग्रहकः विडंबितजगत्त्रयः त्रैलोक्यविडंबनाहेतुः ईदृक् परिग्रहस्य दृढानुराग इति ॥ १ ॥

परिग्रहग्रहावेशाद् दुर्भाषितरजःकिराः । श्रूयंते विकृताः किं न ? प्रलापालिंगिनामपि ॥ २ ॥

व्याख्या—परिग्रहेति 'लिंगिनामपि जैनवेषविडंबकानामपि 'प्रलापाः' असंबद्धव्यसनव्यूहाः किं न श्रूयंते अपि तु श्रूयंतेएव । कथंभूताः प्रलापाः ? परिग्रहावेशात् परिग्रहस्य ग्रहः 'मन्यत्वं' तस्यावेशः, तस्मात् 'दुर्भाषितं' उत्सूत्रवचनं एव रजसः 'किराः' समूहाः, अतएव विकृताः विकारमया इति, एवं हि परिग्रहाभिलाषमया ज्ञानपूजनाद्युपदेशेन परिग्रहमेलनासक्ताः उत्सूत्रं वदंति, पोषयंति विषयान्, परिग्रहीकुर्वंति ज्ञानोपकरणानि, महांतयंति ज्ञानोपकरणैः । उक्तं च उपमिति भव प्रपंचायाम् । "सजातः कदाचिल्लब्धार्यकुलश्रावकसामग्रीसंयोगः श्रुततत्वोपदेशाप्तवैराग्यगृहीतव्रतः मुनिसंघसंयुतः श्रुतलाभेन संपूज्यमानः श्रावकवर्गैः ज्ञानभक्तोपरचितोल्लोचादिसदुपकरणः तैरेव रमणीयकताममत्वाहंकारदू-

पितः तीव्रज्ञानावरणीयकर्मवशात् पतितो निगोदे अनंतभवभ्रमणरूपे, इत्यावर्त्तस्वरूपं भावनीयमात्महिताय सद्भिः, अतः निवारणीयमेव धर्मलिंगविषयपरिग्रहपोषणादिकम् ॥ २ ॥

**यस्त्यक्त्वा तृणवद्बाह्यमांतरं च परिग्रहम् । उदास्ते तत्पदांभोजं, पर्युपास्ते जगत्त्रयी ॥ ३ ॥**

व्या० यस्त्यक्त्वेति यः साधुः 'बाह्यं' धनादि, 'आंतरं' रागादि परिग्रहं, तृणवत् 'त्यक्त्वा' संत्यज्य 'उदास्ते' उदासीनः भवति किं परिग्रहेण मोहकारणेन व्यासंगमूलेन आत्मावलिप्तपंककल्पेन वस्तुतः निस्सारेण ! न एष मम नाहमनेन सुखी, मदिरामत्तपंकावलेपतुल्येन, अहं तु ज्ञानाद्यनंतगुणपूर्णः कथं पुद्गलेषु रमे ? इत्यादिभावनया त्यक्तपरिग्रहः, तत्पदांभोजं "जगत्त्रयी" असुरनरामरश्रेणिः पर्युपास्ते सेवते इत्यर्थः, स त्रिजगद्वंद्यः भवति, तेन स्वरूपानंदरसिकानंदपरिग्रहासक्तिः ॥ ३ ॥

पुनः बाह्यभागेन निर्ग्रंथत्वमानिनं शिक्षयति—

**चित्तेंऽतर्ग्रंथिगहने, बहिर्निर्ग्रंथता वृथा । त्यागात्कंचुकमात्रस्य, भुजगो नहि निर्विषः ॥ ४ ॥**

व्या० चित्तेंऽतर्ग्रंथिगहन इति 'अंतः' चित्ते चेतनापरिणतौ, ग्रंथिः तेन गहने परिग्रहलालसामग्ने, बहिः निर्ग्रंथता वृथा निष्फला, यथा—कंचुकमात्रत्यागात् भुजंगः सर्पः निर्विषो नहि भवति, एवं बाह्यत्यागेन त्यागी न भवति, अंतर्ममत्वपरिहारेण त्यागी भवति ॥ ४ ॥

**त्यक्ते परिग्रहे साधोः, प्रयाति सकलं रजः । पालित्यागे क्षणादेव, सरसः सलिलं यथा ॥ ५ ॥**

व्या० त्यक्ते इति साधोः परिग्रहे त्यक्ते सति 'सकलं' रजः कर्मसमूहः 'प्रयाति' गच्छति । दृष्टांतयति, 'सरसः सलिलं' सरःपानीयं 'पालित्यागे' पालिक्षये क्षणादेव क्षयं याति, अतः सामान्यपरिणतौ लोभपरित्यागेन अनुक्रमेण कर्माभावता भवति ॥ ५ ॥

**त्यक्तपुत्रकलत्रस्य, मूर्छामुक्तस्य योगिनः । चिन्मात्रप्रतिबद्धस्य, का पुद्गलनियंत्रणा ॥ ६ ॥**

व्या० त्यक्तपुत्रेति 'त्यक्ते' दूरं नीते 'पुत्रकलत्रे' संतानवनितासंयोगो येन सः, तस्य 'मूर्छा'सतः परिग्रहस्य संरक्षणा, तया 'मुक्तस्य' रहितस्य 'योगिनः' सम्यग्दर्शनज्ञानचारित्रात्मनः, चिद् ज्ञानं 'तन्मात्रे एव ज्ञाने एव 'प्रतिबंधः' आसक्तता यस्य स, एवंविधस्य तत्वज्ञमुनेः 'पुद्गलनियंत्रणा पुद्गलैकता का नकापीत्यर्थः । भावना च पुत्रवनितासंगरहितस्य पुद्गलसंगोपनाविकलस्य स्वरूपैकत्वकरणबद्धचेतनोपयोगस्य स्वभावानंदपरिभासवर्णिकारूपशुद्धज्ञानानुभवभोगिनः अचेतननश्वरोच्छिष्टानंदविमुक्तेषु पुद्गलेषु रागपरिणतिः न भवति, अत्र वृद्धसंप्रदायेन दृष्टांतः । अउज्ञानयरे सिरिवहो राया, अच्चंतमिच्छदिट्ठी, तस्स सिरिकंतो कुमरो, रूवलावण्णसोहग्गकुसलो पुरंदरो इव सोभंतमाणसंठाणो, जीवाजीवाईतत्तविउ, सुत्तत्थसवणरसिओ, बालभावणभोगलालसाविमुत्तो, सो अणेगाहिंरायकन्नाउ प्रति भाति ? कुमरेणुत्तं भो भद्दे ! कह तुब्भे पिउघरं विमुत्तूण इह समागयाओ ? ताओ भणंति तुह रागाभिलासणीओ, तुझं इठ्ठंकंतरागपइमिच्छामो, ताहे कुमारो भणइ जिणंदवारियकम्मबंधणमूलं भवविवड्ढणं को कुणई ? लोलीभूए कारणेणं

१ अत्रकिमपित्रुटितं

धम्मकरे एगत्तमागए देहे विनिवारिओ सव्वदंसीहिं, ता परदेहेरागो को करेइ सदक्खिन्नो ? निम्मलचरणाचरणं केवलनाणस्स रोहगं रागं अरिहंताई सुवरं, तंपि निच्छयपए तच्चंताव अनत्थपहाणं, विसयरागं कह करिज्जत्ति ? सुहिणो य वीयरायाया नियसहावेस समासत्ता ममं न जुज्जए रागो अन्नेसु तुब्भंपि न जुज्जए एवं इति उवएसेण पडिवोहियकन्ना-सहस्सपरिवरिओ समणो जाओ, कमेण अणुत्तरनाणदंसणचरणवीरिएणं पत्तसुक्कज्झाणो सिद्धो, ताओवि सिद्धाओ ॥ एवं रागत्यागः कार्यः तर्हि परिग्रहरागो हि नात्महिताय कदापि ॥ ६ ॥

**चिन्मात्रदीपको गच्छेन्निर्वातस्थानसंनिभैः । निःपरिग्रहता स्थैर्यं धर्मोपकरणैरपि ॥ ७ ॥**

व्या० चिन्मात्रेति अप्रमत्तसाधोः "चिन्मात्रदीपकः" ज्ञानमात्रस्य प्रदीपः "गच्छेत्" लभेत कैः निर्वातस्थानसंनिभैः पवनप्रेरणारहितस्थानसंयोगैः, तथा—ज्ञानदीपकस्य 'स्थैर्यं' स्थिरत्वं निःपरिग्रहता परिग्रहाभाव एव साधयति, इत्युपदिष्टे कश्चित् धर्मोपकरणस्यापि परिग्रहत्वं जानन् तत्परिहाराय यतते, अतः धर्मोपकरणैः अपि स्थैर्यं वर्द्धते, इति धर्मसंग्रहण्यां सर्वमप्युक्तं शीतातपदंशादिपरीषहोदये स्वाध्यायव्याघाते निःस्पृहत्वेन धर्मोपकरणग्रहणं समाधिस्थिरताहेतुः अमूर्छितस्य न तत्परिग्रहता, नहि पुद्गलजीवयोः एकक्षेत्रावगाहिता परिग्रहः, किंतु चेतनातद्रागद्वेषपरिणतपरिग्रहग्रहत्वं प्राप्नोति, अतः उपकरणानां निमित्तता एव तत्वसाधने यथार्हत्गुरुसंसर्गः निमित्तं एवं आत्मनि स्वरूपस्थेन पुद्गलस्कंधाबाधका आत्मैव तदनुगतः बाधकत्वं करोति ॥ ७ ॥

**मूर्छाछिन्नधियां सर्वं, जगदेव परिग्रहः । मूर्छया रहितानां तु, जगदेवापरिग्रहः ॥ ८ ॥**

**इति परिग्रहाष्टकम् ॥ २५ ॥**

व्या० मूर्छाछन्नेति "मूर्छा" ममत्वं तेन 'छन्ना' छादिता 'धी' बुद्धिः येषां ते तेषां मूर्छामग्नानां स्वकीयतया अप्राप्तमपि सर्वं जगत् परिग्रह एव, तेषां स्वामित्वभोगित्वसुखबुद्धेः समन्वितत्वात् तु पुनः मूर्छया रहितानां पुद्गलेषु भिन्नत्वाग्राह्यत्वेन त्यागवतां जगदेव न परिग्रहः, तत्र रमणाभावात् । उक्तं च श्रीविशेषावश्यके । "तह्मा किमच्छिय यच्छं गंथोगच्छमच्छममुच्छाईणिच्छयउवगच्छाई तेणं जं जं संजमसाहणमरागदोसस्स यतं तमपरिग्गहोविय परिग्गहो जं तदुवयाइ (?) ॥" अत एव आत्मनः परभावरसिकत्वं परिग्रहः ततः तद्धर्मत्वाभावात् आत्मस्वरूपरमणं युक्तम् ॥ ८ ॥

इति व्याख्यातं परिग्रहत्यागाष्टकम् ॥ २५ ॥

---

## अथ अनुभवाष्टकम् ॥ २६ ॥

अथ श्रुताभ्यासपरिग्रहत्यागादयोऽप्यनुभवयुक्तस्य मोक्षसाधकाः, अनुभवशून्यस्य नेति, तत्प्रतिपादनायानुभवाष्टकं निरूप्यते । अनुभवशून्यं ज्ञानं उदककल्पं अनुभवयुक्तं तु पीयूषोपमं, ज्ञानं तु सानुभवस्य । तथा च अनुयोगद्वारे । "वायणापुच्छणा परिवट्टणा धम्मकहा सरअक्खुरवंजणसुद्धा अणुप्पेहारहियस्स दव्वसुयं, अणुप्पेहाभावसुयं" इत्यनेन भावश्रुतं तु संवेदनरूपं न तत्त्वनिष्पादकं, स्पर्शरूपं तत्त्वनिष्पादकमिति, हरिभद्रपूज्याः तत्स्पर्शज्ञानं अनुभवयुक्तस्यैव;

तल्लक्षणं च योगदृष्टिसमुच्चयानुसारेण लिख्यते । "यथार्थवस्तुस्वरूपोपलब्धिपरभावारमणस्वरूपरमणतदास्वादनैकत्व-मनुभवः हेयोपादेयज्ञानसुखास्वादरूपानुभवः, नामतः अभिधानं स्थाप्यमानं द्रव्यानुभवः भुज्यमानं शुभाशुभविपाकेषु अनुपयोगः "अणुवओगोदव्व" इति वचनात् भावानुभवतः अप्रशस्तःसांसारिक विषयकषायानामनुभावैकत्वं, प्रशस्तः अर्हद्गुणानुरागैकत्वं शुद्धानुभवः स्वरूपानंतपर्यायपरिणतवैचित्र्यज्ञानास्वादनैकत्वविश्रांतिलक्षणः, अत्र भावानुभवावसरः स च नैगमतः तदिच्छकः, संग्रहतः उपयुक्तानुपयुक्तस्य तत्कारणाश्रितयोग्यत्वे, व्यवहारतः श्रुताभ्यासवाचनापृच्छनाभोक्तुः, ऋजुसूत्रेण मनसो विकल्परोधपूर्वकतन्मयत्वे वर्त्तमानस्य, शब्दनयेन ज्ञानोपयोगगृहीतानंतधर्मात्मकात्मद्रव्यानंतताज्ञानानुभवे सति, समभिरूढनये तु मुख्यज्ञानदर्शनगुणात्मकत्वानि तद्रमणतद्भोगतदैकत्वरूपानुभवः, एवंभूतनयेनैकमुख्यपर्यायतन्मयत्वानुभवः, अत्र यस्यानुभवस्तस्य भावना कार्या । इत्येवं स्वरूपानुभवमंतरेण ज्ञानाचरणादिकं द्रव्यरूपमेव, अतः सानुभवेन भवितव्यं सर्वत्र गुणपरिणतौ अनुभवेनैवानंदता, नो चेत् शब्दज्ञानशून्यशब्दश्रवणवत् अपार्थकमेवेति । श्रूयते च कष्टानुष्ठानकोटिकरणेऽपि न तत्त्वप्राप्तिः, कुलवालकादीनामिवानुभवमंतरेण परिग्रहप्रसंगोपचितविषयसंगसद्भावेऽपि अंतर्मुहूर्त्तात्मानुभवाभ्याससाध्यरसिकैः तदादरोपदेश उपदिश्यते ।

**संध्येव दिनरात्रिभ्यां, केवलश्रुतयोः पृथक् । बुधैरनुभवो दृष्टः, केवलार्कारुणोदयः ॥ १ ॥**

व्या० संध्येवदिनरात्रिभ्यामिति 'बुधैः' अवगततत्त्वस्वरूपैः । यथा दिनरात्रिभ्यां, यथामध्यं संध्या एव दृष्टाः तथा केवलश्रुतयोः केवलज्ञानश्रुतज्ञानयोः मध्यं अनुभवः दृष्टः, श्रुतज्ञानस्य चिरकालाभ्यासितस्य कार्यरूपः केवलज्ञा,

नस्य सम्यग्दृष्टिगुणस्थानकसाध्यत्वेन लक्षीकृतस्यासाधारणकारणरूपः अनुभवः अध्यात्मैकत्वानंदरूपः दृष्टः, कथंभूत-अनुभवः केवलं सकलासहायिज्ञानमेवार्कस्तस्य अरुणोदयः अरुणः सूर्यसारथिस्तस्य उदयः, पूर्वं अरुणोदयेन तत्सूर्योदयो भवति, एवं अनुभवोदयकेवलार्कोदयः अतोऽनुभवपूर्वकं केवलज्ञानं अनुभवश्च भावनाज्ञानैकत्वरूपः करणीय इति । उक्तं च समुच्चये मतिश्रुतोत्तरभावकेवलात् अव्यवहितपूर्वभावी प्रकाशोऽनुभवः ॥ १ ॥

**व्यापारः सर्वशास्त्राणां, दिक्प्रदर्शन एव हि । पारं तु प्रापयत्येकोऽनुभवो भववारिधेः ॥ २ ॥**

व्या० व्यापार इति 'सर्वशास्त्राणां' चपुनरनुयोगकथकानां, 'व्यापार' उद्यमः अभ्यासः 'दिक्प्रदर्शन एव' मार्गदर्शक एव, यथाहि—पथिकस्य मार्गदर्शकः मार्गं दर्शयति, परं पुरप्राप्तिः सुखचंक्रमणेनैव, एवं शास्त्राभ्यासः परमप्रयासास्वतत्वसाधनविधिदर्शकः, 'भववारिधेः' भवसमुद्रस्य पारं तु एकः अनुभवः प्रापयति, नान्यः श्रीसूत्रकृताङ्गादिषु अध्यात्मभावेन सिद्धिरित्युक्तत्वात्, तेन सद्गुरुचरणचंचरीकैः आत्मस्वरूपभासनतन्मयत्वं निष्पाद्यं ॥ २ ॥

**अतींद्रियं परंब्रह्म, विशुद्धानुभवं विना । शास्त्रयुक्तिशतेनापि, न गम्यं यद्बुधा जगुः ॥ ३ ॥**

व्या० अतींन्द्रियमिति 'बुधाः' पंडिता इति जगुः इतीति किं ? 'शास्त्रयुक्तिशतेनापि' शास्त्रस्य युक्तयः तेषां शतेनापि अनेकागमरहस्यावबोधेनापि 'विशुद्धानुभवं विना निर्मलानुभवमंतरेण अतींद्रियं इंद्रियज्ञानागम्यं परं उत्कृष्टं ब्रह्म चैतन्यं न गम्यं न ज्ञातुं शक्यं । न घटपटादिपदार्थसार्थसमर्थनशब्दसाधनस्वस्वमतन्यासमुधाचिंतनविकल्पतल्पस्थाः

सम्यग् ज्ञानिनः स्याद्वादानेकांतधर्मास्पदीभूतानंतपर्यायोत्पादव्ययपरिणमनाखर्वसंज्ञयावबोधामूर्त्ताखंडानंदात्मस्वरूपज्ञानं तु तत्वानुभवलीना एवास्वादंते, न वचोयुक्तिव्यक्तीकृतवाग्विलासाः इति ॥ ३ ॥

**ज्ञायेरन् हेतुवादेन, पदार्था यद्यतींद्रियाः । कालेनैतावता प्राज्ञैः, कृतः स्यात्तेषु निश्चयः ॥ ४ ॥**

व्या० ज्ञायेरन् इति 'यदि' यावता कालेनातींद्रिया अगोचराः पदार्था धर्मास्तिकायादयः हेतुवादेन, युक्तिप्रमाणसमूहेन, केषां न कल्पनादर्वाग् अनुभवः कृतः स्यात् तदा तेषु धर्मास्तिकायादिषु शुद्धात्मनिश्चयः कृतः स्यात् प्राज्ञैः, इत्यनेन परद्रव्यचिंतनकालमात्रेणात्मस्वरूपचिंतने स्वपरावबोधो भवति, तेन सद्भिः स्वस्वभावभावने मतिः कार्या, येन निःप्रयासत एव 'जेएगंजाणइसे सव्वं जणति" इति वचनात् बोधपरित्यागपरिणतिर्भवति ॥ ४ ॥

**केषां न कल्पनादर्वी, शास्त्रक्षीरान्नगाहिनी । विरलास्तद्रसास्वादविदोऽनुभवजिह्वया ॥ ५ ॥**

व्या० केषांनेति केषां पुरुषाणां कल्पना मतिप्रवृत्तिरूपा दर्वी पाककरणचाटुका शास्त्रमेव क्षीरान्नं परमान्नं तस्य गाहिनी अवगाहिनी न ? अपि तु अस्त्येवेति बुद्धिविकल्पनया शास्त्रगाहिनी मतिर्बहूनां परं अनुभवजिह्वया तद्रसास्वादविदः तेषां शास्त्राणां रसः तद्रसः तस्यास्वादः तस्य विदः ज्ञानिनः विरला अल्पाः शास्त्रस्वादग्राहिणः इति ॥ ५ ॥

**पश्यंति ब्रह्म निर्द्वंद्वं, निर्द्वंद्वानुभवं विना । कथंलिपिमयी दृष्टिर्वाङ्मयी वा मनोमयी ॥ ६ ॥**

व्या० पश्यंति इति 'लिपि मयी' संज्ञाक्षरमयी, 'वाङ्मयी' व्यंजनाक्षरमयी, 'मनोमयी' दृष्टिः योगप्रवृत्तिरूपा 'निर्द्वं-

द्धानुभवं० परोपयोगे मुक्तशुद्धानुभवं शुद्धज्ञानं विना 'निर्द्वंद्वं' परसंनिकर्षरहितं, 'निर्मलं ब्रह्म ज्ञानं आत्मानं कथं पश्यंति ? नहि कर्मोपाधिरूपा बाह्यप्रवृत्तिः परब्रह्मग्राहिका भवति, अनुभवज्ञानी एव शुद्धात्मस्वरूपं पश्यति ॥ ६ ॥

न सुषुप्तिरमोहत्वान्नापि च स्वापजागरौ । कल्पना शिल्पविश्रांतेस्तुर्यैवानुभवे दशा ॥ ७ ॥

व्या० न सुषुप्तिरिति तथा च नयचक्रे दशा चतस्रः, तत्र बहुशयनरूपा मिथ्यात्वस्थानां 'शयनावस्था' । सम्यग्दृशां 'जागरा' । 'प्रमत्ता' प्रमत्तमुनीनां, तुर्या च 'उत्तरा' ध्यानस्थानां, उत्तरोत्तरा सयोगिकेवलिनां । पुनः श्रीविंशतिकायाम् सुषुप्तिः तीव्रनिद्राघूर्णितचेतसां अनुभवज्ञानिनः न, कस्मात् ? अमोहत्वात्, अनुभवी मोहरहितः सुषुप्तिस्थः मोहमयः, तेनानुभवज्ञानवतः सुषुप्तिर्न, तत्वानुभविनः स्वापदशा तथा जागरापि न, एतद्दशाद्वयं कल्पनोपेतं अनुभवः कल्पना विकल्पचेतना, तस्याः शिल्पं विज्ञानं तस्य विश्रांतिः अभाव इत्यर्थः, तस्याः अनुभवे तुर्या एव दशा वाच्या, यद्यपि तुर्या दशा सर्वत्र तथापि यथार्थश्रुतभावितचेतनानां केवलकरणत्वेनोपचारात् स्वरूपाच्च तुर्यैव दशा वक्तुं शक्या, नहि दशात्रयसंभवः तेनानुभवः समाधिहेतुः ॥ ७ ॥

अथ सिद्धांतीकरोति ।

अधिगत्याखिलशब्द—ब्रह्म शास्त्रदृशा मुनिः । स्वसंवेद्यं परं ब्रह्मानुभवेनाधिगच्छति ॥ ८ ॥

इत्यनुभवाष्टककम् ॥ २६ ॥

व्या० अधिगत्येति पूर्वपूर्वसेवनास्थाने 'शास्त्रदृशा' शास्त्रग्रहणबुद्ध्या 'अखिलं' समस्तं 'शब्दब्रह्म षड्भाषावाङ्मयं 'अधिगत्य' ज्ञात्वा तदनंतरं मुनिः 'अनुभवेन' स्वरूपग्राहकदृष्ट्या 'स्वसंवेद्यं' स्वेन आत्मना संवेद्यं ज्ञानस्वादनयोग्यं 'परब्रह्म' शुद्धात्मस्वरूपं 'अधिगच्छति' प्राप्नोति । अतः उक्तं च आगमे—"स समयं जाणेई, परसमयं जाणेई, ससमयं परमसमयं जाणित्ता अप्पाणं भावित्ता भवई ॥" अतएवं आगमाभ्यासपटुमतिः तत्त्वज्ञानानुभवेनात्मस्वरूपं प्राप्नोति तेनानुभवाभ्यासो विधेयः ॥ ८ ॥

इति व्याख्यातं अनुभवाष्टकम् ॥ २६ ॥

---

## अथ योगाष्टकम् ॥ २७ ॥

अथ योगाष्टकं वितन्यते, अत्र मिथ्यात्वादिहेतुगतमनोवाकाययोगत्रयं तच्च कर्मवृद्धिहेतुत्वात् न ग्राह्यं, किं तु मोक्षसाधनहेतुभूतं शुद्धात्मभावनाभावितचेतनावीर्यपरिणामसाधकारकप्रवर्त्तनरूपं ग्राह्यं, द्रव्यभावभेदं वाह्याचारविशो-धिपूर्वकाभ्यंतराचारशुद्धिरूपं ।

**मोक्षेण योजनाद्योगः सर्वोप्याचार इष्यते । विशेषस्थानवर्णार्थालंबनैकाग्र्यगोचरः ॥ १ ॥**

व्या० मोक्षेणेति सकलकर्मक्षयो मोक्षः, तेन "योजनात् योगः" उच्यते सच सर्वोऽप्याचारः जिनशासनोक्ताचरण-सप्ततिकरणसप्ततिरूपः, मोक्षोपायत्वात् योग इष्यते, तत्र तत्र विशेषेण स्थानं १ वर्णः २ अर्थः ३ आलंबनं ४ एका-

मता ५ इति पंचप्रकारः योगः मोक्षोपायहेतुः मतः, इत्यनेनावादि परभावासक्तभवभ्रमणग्रहात् पुद्गलभोगमग्नानां न भवति, अयमभिप्रायः—यतोऽस्माकं मोक्षः साध्योऽस्ति स च गुरुवचनस्मरणतत्वजिज्ञासादियोगेन स्वरूपं निर्मलं निस्संगं परमानंदमयं संस्मृत्य तत्कथाश्रवणप्रीत्यादिकं करोति, स परंपरया सिद्धियोगी भवति, नहि मरुदेवावत् सर्वेपामल्प-प्रयासात् सिद्धिः, तस्याहि अल्पाशातनादोषकारकत्वेन निःप्रयासा सिद्धिः, अन्यजीवानां चिराशातनाबद्धगाढकर्मणां तु स्थानादिक्रमेणैव भवति ॥ १ ॥

अथ योगपंचके वाह्यांतरंगसाधकत्वमुपदिशति ।

**कर्मयोगद्वयं तत्र, ज्ञानयोगत्रयं विदुः । विरतेष्वेव नियमाद्बीजमात्रं परेष्वपि ॥ २ ॥**

व्या० कर्मयोगद्वयमिति तत्र मोक्षसाधने योगद्वयं, 'कर्मयोगद्वयं' क्रियाचारणायोगरूपं निरूप्यते, तत्र स्थापनस्व-रूपं कायोत्सर्गादिजैनागमोक्तक्रियाकरणे करचरणासनमुद्रारूपं, उक्तं च विंशतिकायां ।

गणवन्नत्थालंवलण रहिओ तं तंमि पवहिए । दुगमित्थकम्मयोगो तहानियं नाणयोगो ओ ॥ १ ॥

एप पंचप्रकारो योगः, 'विरतेषु' देशविरतेषु नियमात् भवति । योगपंचकं हि चापल्यवारणं, तेन योगवता भवितव्यं, 'परेषु' मार्गानुसारिप्रमुखेषु 'बीजमात्रं' भवति, किंचिन्मात्रं भवति । उक्तं च—विंशतिकायां ।

देसे सवे य तहा, नियमेण सो चरित्तिणो होइ । इयरस्स वीयमित्तं, इति चुअकेइ इच्छंति ॥ २ ॥ २ ॥

अत्र योगोत्पत्तिहेतवः प्रोच्यंते ।

**कृपानिर्वेदसंवेग–प्रशमोत्पत्तिकारिणः । भेदा प्रत्येकमत्रेच्छाप्रवृत्तिस्थिरसिद्धयः ॥ ३ ॥**

व्या० कृपानिर्वेद इति 'कृपा' अनुकंपा, दुःखितेषु दुःखमोचनलक्षणः आर्द्रतापरिणामः । 'निर्वेदः' भवोद्वेगः चतुर्गतिषु चारकवद्भासनं । संवेगः मोक्षाभिलाषः । 'प्रशमः' कषायाभावः । एते परिणामा, योगो मोक्षोपायः, तस्योत्पत्तिकारिणः करणशीलाः, एतादृग्परिणामपरिणतस्य संसारोद्विग्नस्य, शुद्धात्मस्वादेच्छकस्य, योगसाधना भवति । अत्र योगपंचके 'प्रत्येकं' एकैकस्य चत्वारो भेदा भवंति, ते च—इमे इच्छा १ प्रवृत्तिः २ स्थिरता ३ सिद्धिः ४ इत्येवं भेदा ज्ञेयाः उक्तं च विंशतिकायां ।

इक्किक्को य चउद्धा, इत्थं पुण तत्तणो मुणेयव्वो । इच्छा पवित्तिथिरसिद्धिभेयओ समयनीईए ॥ १ ॥

इत्यादि ॥ ३ ॥

**इच्छा तद्वत्कथाप्रीतिः, प्रवृत्तिः पालनं परम् । स्थैर्यं बाधकभीहानिः सिद्धिरन्यार्थसाधनम् ॥ ४ ॥**

व्या० इच्छा तद्वदिति 'इच्छा' साधकभावाभिलाषः, तत् योगपंचकं येषु विद्यंतेते, तद्वंतः श्रमणाः तेषां कथासु गुणकथनादिषु प्रीतिः इष्टता । उक्तं च हरिभद्रपूज्यैः । "तज्जत्तकहापीई सगयावि परिणामणी इच्छा" इति तस्य सम्यग्दर्शनादिगुणप्रवृद्धिहेतुभूतं क्रियाश्रुताभ्यासपालनं परंपरा उत्कृष्टा सा प्रवृत्तिः । उक्तं च "सव्वत्थुपशमसारं, तप्पालणगा पवित्तीओ"॥ इति इत्येवं योगद्वयं बाह्यरूपत्वात् क्रियामुख्यत्वात् साध्यावलंबिनां कारणरूपं । शेषाणां तु शुभबंधनिबंधनं स्थैर्यं बाधकाशुद्धाध्यवसाया अतिचाराः तेषां भीर्भयं तस्या हानिः अभावनिरतिचारगुणपालनारूपं यत्र क्षयो-

पशमोऽपि अतिगुणसाधनापरिणमनेन सहजभावत्वात् निर्दोषगुणसाधना भवति यत्र तत् स्थैर्यं । उक्तं च—"तह चेव पयपाहगचिंतारहियं थिरत्तणं नेयं ।" शुद्धानां अर्थानां परमात्मरूपाणां साधनं स्वरूपावलंबनं सिद्धिः । उक्तं च—सद्धं परमत्थसाहगंरूवं पुण होइ सिद्धीत्ति" । एवं सप्रभेदं ज्ञेयं ॥ ४ ॥

यावत् ध्यानैकत्वं न भवति तावत् न्यासमुद्रावर्णशुद्धिपूर्वकं आवश्यकचैत्यवंदनप्रत्युपेक्षणादिकं उपयोगयोगचापल्यवारणार्थमवश्यं करणीयं, महद्धितकरं सर्वजीवानां, तेन स्थानवर्णक्रमेण तत्त्वप्राप्तिरिति ।

**अर्थालंबनयोश्चैत्य–वंदनादौ विभावनम् । श्रेयसे योगिनः स्थान–वर्णयोर्यत्न एव च ॥ ५ ॥**

व्या० अर्थालंबनयोरिति 'अर्थो वाक्यस्य भावार्थः, 'आलंबनं' वाच्ये पदार्थे अर्हत्स्वरूपे उपयोगस्यैकत्वं, अर्थश्च आलंबनश्च अर्थालंबनौ, तयोः 'चैत्यवंदनादौ अर्हद्वंदनाधिकारे 'विभावनं स्मरणं करणीयं श्रेयसे कल्याणार्थं, च पुनः स्थानं० वंदनककायोत्सर्गशरीरावस्थानं आसनमुद्रादि, वर्णः अक्षरादि, तयोः शुद्धौ यत्न एव श्रेयसे कल्याणाय भवति । उक्तं चावश्यके—"जं वा इद्धं, वच्चामेलियं, हीणक्खरं, अच्चक्खरं, पयहीणं, विणयहीणं, जोगहीणं, घोसहीणं, सुट्ठुदिन्नं, दुट्ठुपडिच्छियं, अकाले कओ सज्झाओ, काले न कओ सज्झाओ, तस्स मिच्छामि दुक्कडं" इत्यनेन द्रव्यक्षेत्रकालविशुद्धौ भावसाधनसिद्धिः तेन द्रव्यक्रिया हिता ॥ ५ ॥

**आलंबनमिह ज्ञेयं, द्विविधं रूप्यरूपि च । अरूपि गुणसायुज्य–योगोऽनालंबनं परम् ॥ ६ ॥**

व्या० आलंबनमिति इह जैनमार्गे 'आलंबनं द्विविधं ज्ञेयं' द्विप्रकारं ज्ञेयं, एकं रूपि, अपरं अरूपि, तत्र रूप्यालं

वनं—जिनमुद्रादिकपिंडस्थपदस्थपर्यंतं, यावदर्हदवस्थालंवनं तावत्कारणावलंबनं शरीरातिशयोपेतं रूप्यवलंवनं, तत्र अन्नादिपरभावशरीरधनस्वजनावलंवी, परत्र परिणतचेतनविश्वैश्वर्याद्यर्थं तीर्थंकराद्यवलंवनमपि भवहेतुः, तथैव यः स्वरूपानंदपिपासितः स्वरूपसाधना प्रथमकारणरूपं जनेश्वरं वीतरागादिगुणसमूहैः अवलंवते, यावत् मुद्राद्यावलंबनी तावत् रूप्यवलंवनी, स एव अर्हत्सिद्धस्वरूपं ज्ञानदर्शनचारित्राद्यनंतपर्यायविशुद्धशुद्धाध्यात्मधर्मं अवलंवते, इति अरूप्यालंवनी, तत्र भाव्यते अनादितः जीवः मूर्त्तपुद्गलस्कंधावलंवपरिणतः, कथं ? प्रथमतः एवामूर्त्तानंदरूपं स्वरूपमवलंवते अतः अतिशयोपेतवीतरागमुद्रादिकं परं मूर्त्तचालंब्य विषयकषायवृद्धिकरं स्त्रीधनाद्यवलंवनं त्यजति, इत्येका परावृत्तिः, पुनः स एव अतिशयादिरूपमूर्त्तावलंवनी यः अहं तु अमूर्त्तभावरसिकत्वेनोपयुज्यते, अद्यापि अर्हतः संबद्धं तथापि औदयिकं नालंवलं, मम तु गुणावलंवनं उत्तममिति गुणावलंवनी मूर्त्तान् भवान् न रसिकत्वेन गृह्णाति, सापेक्षः परत्वेन पश्यति इति द्वितीया परावृत्तिः एवं अमूर्त्तात्मगुणरसिकः भवति तेन परमेष्ठिस्वरूपकारणेनावधार्य्य । स्वकीयासंख्यप्रदेशव्याप्यव्यापकभावावच्छिन्नद्रव्यास्तिकपर्यायास्तिकानंतस्वभावममलामूर्त्तानंदमयं ध्येयत्वेनालंवते, इति किं तृतीया परावृत्तिः, इति साधनपद्धतिः सर्वेषां तत्स्वरूपसाधनं अरूपिगुणाः सिद्धगुणाः तेषां भावनं सायुज्यं तदात्मता, तया योगः, आत्मोपयोगयोजनं यद्यपि ईषदवलंवनं श्रुतादीनां, तथापि अनालंवनमेव यः उत्कृष्टो योगः, उक्तं च "पाठकः तत्राप्रतिष्ठितः खलु यतः प्रवृत्तश्चलत्यतस्तत्र सर्वोत्रमा भुजः तेनानालंवनोज्झितः (?) ॥ ६ ॥

निरालंवनयोगेन धारावाही प्रशांतयाहिता नाम चित्तं तस्य स्वरसत एव मनः सहजधारायां वर्त्तते, न प्रयासो भवति । उक्तं च विंशतिकायां

आलंवणं पि एयं रूविमरूवि य इत्थपरमोत्ति । तग्गुणपरिणइमित्तो सुहुमो आलंवणो नाम ॥ १ ॥

एकाग्रयोगस्यैवापरनाम अनालंवनयोग इति, एवं स्थानाद्याः पंच इच्छादेर्गुणिता विंशति ( २० ) र्भवंति, तेच प्रत्येकमनुष्टानचतुष्कयोजिता अशीति ( ८० ) प्रकारा भवंति, तत्स्वरूपनिरूपणायोपदिशति—

**प्रीतिर्भक्तिवचोऽसंगैः स्थानाद्यपि चतुर्विधम् । तस्माद्योगियोगात्तेर्मोक्षयोगः क्रमाद्भवेत् ॥ ७ ॥**

व्या० प्रीतिर्भक्तीति एते स्थानादयः,'प्रीतिः' 'भक्तिः' 'वचनं' 'असंग' इति भेदचतुष्टयेनाशीतिभेदा भवंति, तस्मात् योगात्क्रमेण अयोगिनामा योगः, तस्याप्तिः प्राप्तिः भवति, अयोगियोगं । शैलेशीकरणं, सकलयोगचापल्यरहितो योगःप्राप्नोति, तेन पुनः क्रमान्मोक्षः सर्वकर्माभावलक्षणः "आत्मनः तादात्म्यावस्थानं मोक्षः" एवं योगसंयोगः क्रमात् अनुक्रमेण भवति ।

अथ—प्रीत्याद्यनुष्ठानस्वरूपं पोडशकतो लिख्यते । अस्य चानुष्ठानता सांसारिकपरिणतौ, सा च परावृत्य तत्वसाधने करणीया । यत्रादरोऽस्ति परमः, प्रीतिः स्वहितोदयात् भवेत्कर्तुः । शेषत्यागेन करोति यत्तु तत्प्रीत्यनुष्ठानं ॥ १ ॥ इति । प्रीतिलक्षणं । गौरवविशेषयोगाद्बुद्धिमतो यद्विशुद्धतरयोगं । क्रियते तत्तुल्यमपि ज्ञेयं तद्भक्त्यनुष्ठानं ॥ २ ॥ अत्यंत-वल्लभा खलु पत्नी तद्वद्धिता च जननीति । तुल्यमपि कृतमनयोर्ज्ञातंस्यात्प्रीतिभक्तिगतं ॥ ३ ॥ इति भक्तिलक्षणं । वच-नात्मिका प्रवृत्तिः सर्वज्ञौचित्ययोगतो या तु । वचनानुष्ठानमिदं चारित्रवतो नियोगेन ॥ ४ ॥ इति वचनलक्षणं । यत्त्व-

भ्यासातिशयात्सात्मीभूतमिव चेष्टते सद्भिः । तदसंगानुष्ठानं, भवति चैतन्न देवधियम् ॥ ५ ॥ चक्रभ्रमणं दंडात्तदभावे चैव यत्परं भवति । वचनासंगानुष्ठानयोस्तु तद्रूज्ञापकं ज्ञेयं ॥ ६ ॥ अभ्युदये फले वाद्ये निःश्रेयससाधने चरमे । एतदनुष्ठानानां विज्ञेये महता यतः ॥ ७ ॥ इति एवं क्रमेण योगसाधनारतः सर्वयोगरोधं कृत्वा अयोगी भवति ॥ ७ ॥

स्थानाद्ययोगिनस्तीर्थोच्छेदाद्यालंबनादपि । सूत्रदाने महादोष, इत्याचार्याः प्रचक्षते ॥ ८ ॥

इति योगाष्टकम् ॥ २७ ॥

व्या० स्थानाद्ययोगिन इति स्थापनादिप्रवृत्तियोगरहितस्य सूत्रदानं महादोष इति आचार्या हरिभद्रादयः 'प्रचक्षते' कथयंति, कस्मात् ? तीर्थोच्छेदाद्यालंबनात्, निरास्तिकस्य सूत्रदाने कदाचित् कुप्ररूपणाकरणेन तीर्थोच्छेदो भवति । उक्तं च विंशतिकायां ।

तित्थेसुच्छेदाइविलंबणजंसएयएमेवा । सुत्तकिरीयाईनासो, एसो असमंजसविहाणो ॥ १ ॥

सो एस वंक उच्चियनेयसमसमयमावियाणविय । सायंपि भावियव्वं इह तित्थुच्छेयभीरुहिं ॥ २ ॥

मुत्तूणलोगसन्नं, उड्ढूणयसाहूसमयसब्भावं । सम्मं परियहिव्वं, वुद्धेण मई निउण वुद्धीए ॥ ३ ॥

एवं प्रथमं स्थानादिविशुद्धिं कृत्वा इच्छादिपरिणतः क्रमेण स्वरूपावलंबनादि गृहीत्वा प्रीत्याद्यनुष्ठानेन असंगानुष्ठाने गतः सर्वज्ञो भूत्वा अयोगी भूय सिद्धो भवति, अतः क्रमसमाराधना श्रेयस्करी ।

इति व्याख्यातं योगाष्टकम् ॥ २७ ॥

## अथ नियागाष्टकम् ॥ २८ ॥

'नियागः' कर्मदहनं तत्र 'नितरां' निश्चयेन 'यागः' यजनं नियागः । उक्तं च ।—"सुसंवुडा पंचहिं संवरेहिं इह जी-वियं अणवकंखमाणा वोसट्ठकाया सुईचत्तदेहा महाजयं जयति जन्नसेट्ठं ॥ १ ॥ के ते जोइ केव ते जोईठाणा का तेसु या किंचतेकारसंगं पहायते कयरासंतिभिक्खू कयरेण होमेण हुणासिजोइं ॥ २ ॥ तवो जोई जीवो जोइ ठाणंजोगासुआसरीरं करीसंगं कम्मंपहा संजमजोगसंतिहोमहुणामिइसिणं पसत्थं ॥ ३ ॥" उत्तराध्ययने नियागपहिवत्ते, श्रीआचारांगसूत्रे निर्युक्तितः निक्षेपादिकं ज्ञेयं तत्स्वरूपं निवेदयति ।

**यः कर्म हुतवान् दीप्ते ब्रह्माग्नौ ध्यानध्यायया । स निश्चितेन यागेन नियागप्रतिपत्तिमान् ॥ १ ॥**

व्या० यः कर्मेति यः ब्रह्माग्नौ आत्मस्वरूपैकत्वरूपाग्नौ ध्यानध्यायया ध्यानेंधनेन दीप्ते सति कर्म ज्ञानावरणादिकं 'हुतवान्' होमं कृतवान् स मुनिः 'निश्चितेन' आभ्यंतरेण यागेन सम्यग्दर्शनज्ञानचारित्रैकत्ववीर्यतीक्ष्णत्वरूपेण युक्तः नियागप्रतिपत्तिमान् उच्यते ॥ १ ॥

**पापध्वंसिनि निःकामे, ज्ञानयज्ञे रतो भव । सावद्यैः कर्मयज्ञैः किं ? भूतिकामनयाविलैः ॥ २ ॥**

व्या० पापध्वंसिनीति भो दक्ष ! निःकामे सर्वपरभावाभिलापरहिते 'पापध्वंसिनि' पापकर्मविनाशके आत्मस्वरूपे ज्ञानं स्वपरावयवभासकं तद्रूपे यज्ञे रतो भव तन्मयो भव किं 'भूतिकामनया' इहलोकसुखेच्छया 'सावद्यैः' पापसहितै-

'आविलैः' म्लानैः यज्ञैः किं ? न किमपि न हिताय ते तत्करणं न युक्तं, आत्मस्वरूपो यागः तन्मयैकत्वपरिणतिः कर्माः भावकरी तेन तत्र यतितव्यं ॥ २ ॥

**वेदोक्तत्वान्मनः शुद्ध्या, कर्मयज्ञोऽपि योगिनः । ब्रह्मयज्ञ इतीच्छंतः, श्येनयागं त्यजंति किम् ? ॥३॥**

व्या० वेदोक्तत्वादिति वेदोक्तत्वात् मनःशुद्ध्या कर्मयज्ञः अपि ब्रह्मयज्ञ इति इच्छंतः श्येनयागं किं त्यजंति ? इति स्वमतकल्पनां कुर्वंति मूढाः ते निषेधनीयाः, नहि संसारकामनया हिंसा सुखकरी भवति साध्यशुद्धिमंतरेण न प्रयासो हिताय, अतः नैव कर्त्तव्यं इति ॥ ३ ॥

**ब्रह्मयज्ञःपरं कर्म, गृहस्थस्याधिकारिणः । पूजादिवीतरागस्य, ज्ञानमेव तु योगिनः ॥ ४ ॥**

व्या०ब्रह्मयज्ञ इति 'गृहस्थस्य' सावद्यप्रवृत्तस्य 'अधिकारिणः' योग्यस्य न्यायोपार्जितादिवित्तवतः, वीतरागस्य पूजादिकर्मकरणं परं उत्कृष्टं ब्रह्मयज्ञ इति ज्ञेयं, संवराभावे आश्रमाणां परावृत्तिः प्रशस्तकरणं युक्तं उक्तं च

अकसिणपवत्तगाणं, विरयाविरयाण एस खलु जुत्तो । संसारपयणुकरणे, दव्वथयेकूवदिट्ठंतो ॥ १ ॥

इति रागपापस्थानस्य प्रशस्तताकरणोपदेशः। आगमे सर्वाश्रवाणां प्रशस्ता साधने गृहीता,तथा च मुनि विनये शासनविनये हर्षादिजीवघातोऽपि न वधाय,तथा—प्रज्ञापनायां 'भाषाचतुष्टयमपि'मुनीनां,इत्यादिकं,ततः श्रावाकाणां तु हिंसादिसर्वपरवृत्तिगुणिभक्तिरूपा हिता,तु पुनः योगिनः ज्ञानं ज्ञानरमणमेव हितं,नहिमुनिर्बाह्यप्रवृत्तिः अतः ज्ञाने रममाणस्तत्वं साधयति ॥४॥

**भिन्नोद्देशेन विहितं, कर्म कर्मक्षयाऽक्षमम् । कृतभिन्नाधिकारं च, पुत्रेष्ट्यादिवदिष्यताम् ॥ ५ ॥**

व्या० भिन्नोद्देशेनेति 'भिन्नोद्देशेन' परमात्मसाधनोद्देशमंतरेण 'भिन्नेन' पुण्यादिवांछोद्देशेन 'विहितं' कृतं 'कर्म' पूजादिकार्यं कर्मक्षयाय अक्षमं असमर्थं भवति, नहि भिन्नसाध्येन कृतं दयादानादिकं धर्मसाध्यशून्यता सत्प्रवृत्तिः बालक्रीडातुल्या कल्पितभिन्नाधिकारं कर्म कार्यं पुत्रेष्ट्यादिवत् इष्यतां इति, यथा जलार्थिनीवनिता कूपोपकंठे जलार्थं घटे च रज्जुवंधं कुर्वती परपुरुषरूपव्याकुलितचित्ता स्वपुत्रे एव पाशवंधं कृतवती दुःखभाजनं भवति, एवं साध्यच्युतानां क्रिया दुःखहेतुरूपा उक्ता ॥ ५ ॥

ब्रह्मार्पणमपि ब्रह्म यज्ञांतर्भावसाधनम् । ब्रह्माग्नौ कर्मणो युक्तं, स्वकृतत्वस्मये हुते ॥ ६ ॥

व्या० ब्रह्मार्पणमिति—भो विद्वन् यदि त्वं ब्रह्मार्पणं सर्वं स्वकृतं ब्रह्मणि परमेश्वरे यदर्पणं प्रयच्छनं तत्रैवारोपणं एतत्सर्वं परमेश्वरकृतं जातं मत्कृतं न किंचनेति धीरिति यावत् । तत् ब्रह्मयज्ञान्तर्भावसाधनं ब्रह्मयज्ञो ज्ञानयज्ञस्तस्य योऽन्तर्भाव आत्मीयभावफलप्राप्तिस्वीकारस्तस्य साधनं तन्निष्पादकत्वकारणं मन्यसे, यद्वा तत्फलमिच्छसि । तर्हि त्वं तत्कृते स्वकृतत्वस्मये स्वस्य जीवस्य यत्कृतं निर्मितं कर्म तद्भावस्तत्त्वं तद्रूपो यः स्मयोऽहंकारस्तस्मिन् निमित्तभूते । हुते हुतमग्नौ प्रक्षेपणां मया निर्मितमिति अहंकारहोमनिमित्त इति यावत् । कर्मणो ज्ञानावरणादिकस्य । ब्रह्माग्नौ ब्रह्म शुद्धतीव्रोपयोगिज्ञानं निराशंसतपश्च तद्रूपो योऽग्निरूर्ध्वं गच्छतीति व्युत्पत्तिमत्तेजस्तस्मिन् । आहुतिकरणं युक्तं घटमानं । न तु पश्चादेरित्यर्थः ॥ ६ ॥

अथ श्लोकद्वयेन स्वरूपफलदर्शनपूर्वकमुपसंहरति—

**ब्रह्मण्यर्पितसर्वस्वो ब्रह्मदृग्ब्रह्मसाधनः । ब्रह्मणा जुह्वदब्रह्म ब्रह्मणि ब्रह्मगुप्तिमान् ॥ ७ ॥**

व्या० ब्रह्मन्यर्पणमपीति 'ब्रह्मणि' आत्मनि अर्पितसर्वस्वः, अर्पितं स्थापितं सर्वस्वं सर्वात्मपरिणमनरूपं इत्यनेन ज्ञानवीर्यलाभभोगादयः स्वक्षयोपशमीभूता भावे आत्मनि एवार्पिताः स्थापिता येन सः । तथा 'ब्रह्म' आत्मज्ञानं वा 'दृग्' दृष्टिर्दर्शनं श्रद्धानं ब्रह्मणि साधनं यस्य सः ब्रह्मसाधनः, अथवा—'ब्रह्म' आत्मा एव साधने यस्य सः एवंविधः साधकजीवः 'ब्रह्मणि' साधकावस्थापरिणतस्वात्मनि आधारभूते ब्रह्मणात्मज्ञानवीर्याभ्यां अब्रह्म अज्ञानं पुद्गलकर्मवात्मनः भिन्नं अजुहवत् भस्मीचकार, कथंभूतः साधकपुरुषः ? 'ब्रह्म' ब्रह्मचर्यं स्वरूपरमणरूपं तस्य गुप्तिमान् तद् गुप्तियुक्तः इत्यनेन चात्मा कर्त्ता आत्मस्वरूपेणकरण भूतेन आत्मस्वरूपरोधकं ज्ञानावरणादि कर्म आत्मनि स्थितं निवारयति॥ ७ ॥

**ब्रह्माध्ययननिष्ठावान् परब्रह्मसमाहितः । ब्राह्मणो लिप्यते नाघैर्नियागप्रतिपत्तिमान् ॥ ८ ॥**

## इति नियागाष्टकम् ॥ २८ ॥

व्या० ब्रह्माध्ययनेति ब्राह्मणो मुनिः श्रमणो द्रव्यभावब्रह्मचर्ये रतः ब्रह्मणः अघैः पापैः न लिप्यते न लेपवान् भवति, कथंभूतः ब्राह्मणः ? ब्रह्माध्ययनं आचारांगप्रथमश्रुतस्कंधनवमाध्ययनं, तस्मिन् उक्ता निष्ठा मर्यादा तद्वान्, परिणतिपरिणतः पुनः परब्रह्म शुद्धात्मस्वरूपं, तेन समाहितः समाधिमयः, पुनः नियागः कर्मक्षपणं, तस्य प्रतिपतिः तद्-

रूपता तद्वान् परिणतः, भिक्षुः पापैर्न लिप्यते, नावगुंठनावान् भवति, अतएव स्वरूपभासनरमणपरिणतः अनादिकः र्मपटलक्षयं कृत्वा सिद्धबुद्धः परमानंदमयो भवति, अतो भावनियागः कर्मदहनरूपः करणीय इति, तत्वं ॥ ८ ॥

इति व्याख्यातं नियागाष्टकम् ॥ २८ ॥

## अथ भावपूजाष्टकम् ॥ २९ ॥

अथ द्रव्यपूजोपस्कररूपं भावपूजास्वरूपभावनोपचाररूपं भावपूजाष्टकं वितन्यते । तत्र गृहस्थः अनेकसंसारभावत्रस्त-कदाचिद् निर्विकारानंदरूपां जिनमुद्रां विलोक्य प्राप्तवैराग्यः भवोद्विग्नः सर्वासंयमत्यागाभिलाषी परमसंवररूपं परमेश्वरं सद्भक्त्या पूजयति, स्वयोगसपरिग्रहादिकं सर्वथा त्यक्तुमसमर्थः सर्वमपि तीर्थंकरभक्तियुक्तं करोति, ततश्च आत्मा स्वगुणपरिणतः स्वरूपसाधनारूपां भावपूजां करोति । तत्स्वरूपं नामतः पूजा इति कथनं । स्थापनात् तल्लिंगाचरणं । द्रव्यतः चंदनादिभिः । शून्योपयोगेग च । भावतः गुणैकत्वरूपा सा व्याख्यायते ।

**दयांभसा कृतस्नानः, संतोषशुभवस्त्रभृत् । विवेकतिलकभ्राजी, भावना पावनाशयः ॥ १ ॥**

**भक्तिश्रद्धानघुसृणोन्मिश्रकश्मीरजद्रवैः । नवब्रह्मगतो देवं, शुद्धमात्मानमर्चय ॥ २ ॥**

व्या० दयांभसा इति भक्तिश्रद्धानेति श्लोकद्वयस्य युग्मतः व्याख्यानं दर्शयति । हे उत्तम ! एवंविधं 'शुद्धात्मानं' अनंतज्ञानादिपर्यायं आत्मरूपं देवं नमय इति, नवप्रकारब्रह्मरूपं गतः अर्चय पूजां कुरु, कीदृशो भूत्वा ? इत्याह—

'दया' द्रव्यभावस्वपरप्राणरक्षणारूपा सा एव 'अंभः' जलं पानीयं तेन कृतं स्नानं पावित्र्यं येन सः । संतोषः पुद्गलभाव-पिपासा शोकाभावरूपः स एव शुभानि वस्त्राणि तेषां 'भृत्' धारकः विवेकः स्वपरविभजनरूपं ज्ञानं तदेव तिलकं तेन भ्राजी शोभमानः । पुनः कथंभूतः ? 'भावना' अर्हद्गुणैकत्वरूपा तया 'पावनः' पवित्रः 'आशयः' अभिप्रायः यस्य सः पुनः 'भक्ति' आराध्यता 'श्रद्धा' प्रीतिः 'एसअट्ठेपरमट्ठे' एवंरूपा तद्रूपेण घुसृणेन उन्मिश्रं काश्मीरजं तस्य द्रवाः तै शुद्धात्मा परमेश्वरः स्वकीयात्मापि दीव्यति स्वरूपे इति देवस्तं अर्चय पूजय तद्भिक्तिरतो भव इति ॥ १ ॥ २ ॥

अथ अनुक्रमेण पूजाप्रकारानाह ।

**क्षमापुष्पस्रजं धर्मयुग्मक्षौमद्वयं तथा । ध्यानाभरणसारं च, तदंगे विनिवेशय ॥ ३ ॥**

व्या० क्षमापुष्पस्रजमिति हे भव्य ! तदंगे आत्मस्वरूपरूपे अंगे 'क्षमा' क्रोधोपशमनवचनं धर्मक्षमारूपां 'स्रजं' पुष्पमालां 'निवेशय' स्थापय । तथा तथैव 'धर्मयुग्मं' श्रावकसाधुरूपं श्रुतचारित्ररूपं वा क्षौमवस्त्रद्वयं निवेशय । च पुनः 'ध्याने' धर्मशुक्ले ते एव आभरणस्य सारं प्रधानं परमब्रह्मणि निवेशय । इत्येवं गुणपरिणमनरूपां पूजां कुरु ॥ ३ ॥

**मदस्थानभिदात्यागैर्लिखाग्रे चाष्टमंगलम् । ज्ञानाग्नौ शुभसंकल्पकाकतुंडं च धूपय ॥ ४ ॥**

व्या० मदस्थानेति 'मदः' मानोन्मादः तस्य स्थानानि तानि एव भिदाः तासां 'त्यागैः' वर्जनैः अष्टमंगलं अग्रे लिख-वा ज्ञानादौ 'शुभसंकल्पः शुभरागपरिणामः तद् रूपं 'काकतुंडं' कृष्णागरुं धूपय । इत्यनेन रागाध्यवसायाः शुभाः पुण्य, हेतवः सिद्धिसाधने त्याज्या एव अतः ज्ञानबलेनो तत्त्यागः भवति ॥ ४ ॥

प्राग्धर्मलवणोत्तारं, धर्म संन्यासवह्निना । कुर्वन् पूरय सामर्थ्य–राजन्नीराजनाविधिम् ॥ ५ ॥

व्या० प्राग्धर्मेति अत्रात्मस्वरूपार्चने 'धर्मसंन्यासवह्निना' धर्मः स्वरूपमत्ता सहजपारिणामिकलक्षणः चंदनगंध-तुल्यः तस्य सम्यग् न्यासः स्थापनं स एव वह्निः तेन प्राक् पूर्वसाधनरूपः धर्मः सविकल्पभावनारूपः तदेव लवणं तस्यो-त्तारं निवारणं निर्विकल्पसमाधौ साधकस्यापि सविकल्पधर्मस्य त्याग एव भवति, एवं भावरूपं अपवादसाधनरूपलवणो-त्तारं कुर्वन् सामर्थ्यराजन्नीराजनाविधिं पूर्वसामर्थ्ययोगस्वरूपा राजंती शोभमाना नीराजना आरात्रिका तस्याः विधिः तं पूरय । सामर्थ्ययोगस्वरूपं च यत्र कर्मबंधहेतुषु प्रवर्त्तमानवीर्यस्य न तादृक् प्रवृत्तिः स्वात्मधर्मसाधनानुभवै-कत्वे प्रवर्त्तमानः निःप्रयासत्वेन प्रवर्त्तते स योगः समर्थ उच्यते ॥ ५ ॥

स्फुरन्मंगलदीपं च, स्थापयानुभवं पुरः । योगनृत्यपरस्तूर्यत्रिकसंयमवान् भव ॥ ६ ॥

व्या० स्फुटन्मंगलेति च पुनः 'स्फुरंतं' देदीप्यमानं सर्वद्रव्यभावोपद्रववियुतं मंगलदीपं भावप्रकाशं 'अनुभवं' स्पर्शज्ञानं आत्मस्वभावास्वादनयुक्तं ज्ञानं 'पुरः' अग्रे स्थापय, योगाः मनोवाक्कायरूपाः तेषां साधनप्रवर्त्तनरूपं "नृत्यं" तांडवं तत्र 'तत्परः' सोद्यमः सन् परमाध्यात्मधारणाध्यानसमाधिरूपसाधनयोग्ययोगपरिणमनरूपतूर्यादिपूजात्रय-मयो भव, इत्यनेन आभ्यंतरपूजया तत्त्वानंदमयश्चैतन्यलक्षणं स्वात्मानं तद्रूपं कुरु ॥ ६ ॥

उल्लसन्मनसः सत्यघंटां वादयतस्तव । भावपूजारतस्येत्थं करक्रोडे महोदयः ॥ ७ ॥

व्या० उल्लसन्मनस इति इत्थं भावपूजारतस्य तव 'महोदयः' मोक्षः 'करक्रोडे' हस्ततलेऽस्ति किं कुर्वत ? उल्लसन्मनसः भावोल्लासयुक्तचित्तस्य सत्यपर्यायरूपां घंटां वादयतः शब्दं कुर्वतः इत्यनेन सहर्षसत्यमनउल्लासरूपां घंटां नादयतः सतः पूर्वोक्तपूजाकरणेन सर्वस्वशक्तिप्रादुर्भावरूपः मोक्षो भवति ॥ ७ ॥

द्रव्यपूजोचिता भेदोपासना गृहमेधिनाम् । भावपूजा तु साधूनामभेदोपासनात्मिका ॥ ८ ॥

इति भावपूजाष्टकम् ॥ २९ ॥

व्या० द्रव्यपूजेति 'गृहमेधिनां' गृहस्थानां "भेदोपासनारूपा" आत्मनः सकाशात् अर्हन् परमेश्वरः भिन्नः निष्पन्नानंदचिद्विलासी तस्योपासना सेवना निमित्तालंबनरूपा द्रव्यपूजा 'उचिता' योग्या तु पुनः साधूनां अभेदोपासनात्मिका परमात्मना स्वाभेदरूपा भावपूजा उचिता । यद्यपि सविकल्पकभावपूजा गुणस्मरणबहुमानोपयोगरूपा भावपूजा गृहिणां भवति तथापि निर्विकल्पोपयोगस्वरूपैकत्वरूपा भावपूजा निर्ग्रंथानामेव, एवं आश्रवकषाययोगचावल्यपरावृत्तिरूपद्रव्यपूजाभ्यासेन अर्हद्गुणस्वात्मधर्मैकत्वरूपभावपूजावान् भवति तेन च तन्मयतां प्राप्य सिद्धो भवति, इत्येव साध्योपयोगमुक्तेन सिद्धिः निःकर्मा भवति ॥ ८ ॥

इति व्याख्यातं भावपूजाष्टकम् ॥ २९ ॥

## अथ ध्यानाष्टकम् ॥ ३० ॥

अथ ध्यानाष्टकं विस्तार्यते । ध्यानलक्षणं निर्युक्तौ—

अंतो मुहुत्तमित्तं, चित्तावथाण एगवत्थुमि । छउमत्थाणं ज्ञाणं, जोगनिरोहो जिणाणं तु ॥ १ ॥

नामादिकं स्वतः वाच्यं तत्र ध्यानस्वरूपं निरूपयन्नाह ।

**ध्याता ध्येयं तथा ध्यानं, त्रयं यस्यैकतां गतम् । मुनेरनन्यचित्तस्य, तस्य दुःखं न विद्यते ॥ १ ॥**

व्या० ध्याता ध्येयमिति यस्य पुरुषस्य ध्याता ध्येयं तथा ध्यानं एतत् त्रयं यस्य जीवस्य 'एकतां' एकभावं गतं तस्य मुनेः 'अनन्यचित्तस्य' तद्रूपचेतनामयस्य अर्हत्स्वरूपात्मस्वरूपतुल्योपयोगगृहीतस्य 'दुःखं' स्वगुणावरणरूपं पुद्गलसंनिकर्षजन्यं न विद्यते नास्तीत्यर्थः । उक्तं च प्रवचनसारे ।

जो जाणई अरिहंते, दव्वत्तगुणत्तपज्जवत्तेहिं । सो जाणइ अप्पाणं, मोहो खलु जाइ तस्स लयं ॥ १ ॥

ध्याता आत्मा ध्येयं तत्स्वरूपं ध्यानं तत्रैकता तत्र अभेदता एतत् त्रयं एकत्वं प्राप्तं मोहक्षयाय भवति ॥ १ ॥

**ध्यातांतरात्मा ध्येयस्तु, परमात्मा प्रकीर्त्तितः । ध्यानं चैकाग्र्यसंवित्तिः, समापत्तिस्तदेकता ॥ २ ॥**

व्या० ध्यातेति ध्यातृस्वरूपं उक्तं श्रीहेमसूरिपूज्यैः—

अमुंचन् प्राणनाशेऽपि, संयमैकधुरीणताम् । परमात्मवत्पश्यन् स्वं, स्वस्वरूपापरिच्युतम् ॥ १ ॥

उपतापमसंप्राप्तः, शीतवातातपादिभिः । पिपासुरमराकार—योगामृतरसायनम् ॥ २ ॥

रागादिभिरनाक्रांतं, क्रोधादिभिरदूषितम् । आत्मारामं मनः कुर्वन्, निर्लेपः सर्वकर्मसु ॥ ३ ॥
विरतः कर्मरागेभ्यः, स्वशरीरेऽपि निःस्पृहः । संवेगाद्हृदि निर्मग्नः, सर्वत्र समतां श्रयन् ॥ ४ ॥
नरेंद्रे वा दरिद्रे वा, तुल्यकल्याणकामनः । अमात्रकरुणापात्रं, भव सौख्यपराङ्मुखः ॥ ५ ॥
सुमेरुरिव निःकंपः, शशीवानंददायकः । समीर इव निःसंगः सुधीर्ध्याता प्रशस्यते ॥ ६ ॥

इति ध्यातृस्वरूपं । एवं, विधः ध्याता 'अंतरात्मा' साधकात्मा, तु पुनः 'ध्येयः' ध्यातुं योग्यः परमात्मा क्षीणघात कर्मा अर्हन् नष्टाष्टकर्मा सिद्धोवा सुवृत्त्या सत्तागतः सिद्धात्मा ध्येयः प्रकीर्त्तितः च पुनः एकाग्रसंवित्तिः ऐकाग्र्यं तन्मयत्वेन परमात्मस्वरूपे अनंतपर्यायात्मके एकाग्रत्वेन 'संवित्तिः' ज्ञानं ध्यानं उच्यते इत्यनेन अर्हदादिशुद्धगुणज्ञानसंवेदन-तन्मयता ध्यानं चेतनावीर्यादीनां सर्वक्षयोपशमानां स्वरूपोपयोगलीनत्वं ध्यानं, तत्र ध्यातुः ध्येये तदेकाग्रतारूपे ध्याने समापत्तिः निर्विकल्पता तारतम्यरहिता चित्परिणतिः एकता ज्ञेया ॥ २ ॥

तत्र दृष्टांतेन कथयति ।

**मणौ बिंबप्रतिच्छायासमापत्तिः परात्मनः । क्षीणवृत्तौ भवेद् ध्यानादंतरात्मनि निर्मले ॥ ३ ॥**

व्या० मणौ बिंबेति यथा 'मणौ' रत्ने बिंबस्य प्रतिच्छाया तथा 'अंतरात्मनि' स्वस्वरूपे 'परमात्मनः' निर्मलात्मनः 'ध्यानात् समापत्तिः' सिद्धात्मनः स्वात्मत्वैकतारूपा भवेत्, कथंभूते अंतरात्मनि ? 'निर्मले' कषायविकल्पमलरहिते पुनः

किं भूते ? 'क्षीणवृत्तौ' क्षीणा वृत्तिः पराजीविका यस्य सः क्षीणवृत्तिः तस्मिन् एव समापत्तौ ध्यानसिद्धिः भवति 'इत्थं' पूर्वोक्तप्रकारेण अन्यत्रोक्तं ।

मणेरिवाभिजातस्य, क्षीणवृत्तेरसंशयम् । तत्स्थात्तदंजनत्वाच्च, समापत्तिः प्रकीर्त्तिता ॥ १ ॥

अंतरात्मनि परमात्मतः अभेदारोपः ध्यानफलं तच्च संसर्गारोपतो भवति, संसर्गश्चात्र निष्पन्नानंततात्विकसिद्धात्मनामुपयोगः तच्च चलचित्तानामिंद्रियरोधमंतरेण न भवति, इंद्रियरोधश्च जिनप्रतिमादिकारणमंतरेण न जायते अतस्थापना तत्वोपकारकरिका ॥ २ ॥

आपत्तिश्च ततः पुण्यतीर्थकृत्कर्मबंधतः । तद्भावाभिमुखत्वेन संपत्तिश्च क्रमाद्भवेत् ॥ ४ ॥

व्या० आपत्तिश्चेति' च पुनः 'आपत्तिः' जिनभक्ति स्तन्मयत्वं ततः पश्चात् 'पुण्यं०' पुण्यप्रकृतिरूपं तीर्थकृत् विश्वोपकारि संघस्थापकातिशयरूपं नामकर्म तस्य बंधतः तद्भावाभिमुखत्वेन तदुपयोगेन क्रमात् संपत्तिः भवेत्, परमैश्वर्यं भवेत् । इदं च निरनुबंधरूपं फलं दर्शितं ॥ ४ ॥

अथ ध्यानशून्यत्वेन सफलं नेति दर्शयति ।

इत्थं ध्यानफलाद्युक्तं विंशति स्थानकाद्यपि । कष्टमात्रं त्वभव्यानामपि नो दुर्लभं भवेत् ॥ ५ ॥

व्या० इत्थमिति' इत्थं पूर्वोक्तप्रकारेण 'ध्यानफलात्' त्रिविधध्यानोपयोगात् विंशतिस्थानकाद्यपि विंशतिस्थान

प्रमुखं गुणिबहुमानेन युक्तं कर्तुं उचितं, अभव्यानां तु अन्यत् सम्यग्दर्शनादिगुणिबहुमानध्यानोपयोगशून्यं विंशतिस्थानादि तपोव्यूहं 'कष्टमात्रं' कायक्लेशरूपं 'भवे' संसारे नो दुर्लभं बाह्याचरणं जैनोक्तमपि बहुशः अभव्यैः कृतपूर्वमिति ॥ ५ ॥

अथ ध्यानकारकस्य स्वरूपं निदर्शयन् श्लोकत्रयमाह ।

जितेंद्रियस्य धीरस्य, प्रशांतस्य स्थिरात्मनः । सुखासनस्य नासाग्र—न्यस्तनेत्रस्य योगिनः ॥ ६ ॥

रुद्धबाष्पमनोवृत्तेर्धारणाधारया रयात् । प्रसन्नास्याप्रमत्तस्य चिदानंदसुधालिहः ॥ ७ ॥

साम्राज्यमप्रतिद्वंद्वमंतरेव वितन्वतः । ध्यानिनो नोपमा लोके, सदेवमनुजेऽपि हि ॥ ८ ॥

इति ध्यानाष्टकम् ॥ ३० ॥

व्या० जितेंद्रियेति, रुद्धबाष्पेति, साम्राज्यमिति, एवंविधस्य ध्यानिनः 'ही' ति निश्चितं 'सदेवमनुजेऽपि लोके' ससुरनरे लोके तिर्यग् नारकाग्रहणं तु तयोर्दुर्गतित्वात्, इत्यनेन त्रिभुवने उपमाना सादृश्यं तत्वज्ञानानुभवलीनस्य सहजानंदविलासकस्य तुलना केन क्रियते? इति, किं कुर्वतस्तस्य अंतरे च आत्मांतरमध्ये एव अप्रतिद्वंद्वं बाह्याभ्यंतरविपक्षरहितं सर्वपरभावागम्यं साम्राज्यं स्वगुणसंपत् स्वभावपरिवारोपेतं राज्यं स्वाधीनं वितन्वतः विस्तारयतः स्वगुणानंदासंख्येयप्रदेशप्रदेशनिर्व्याघातं स्वराज्यमनुभवतः अतः सर्वेऽपि षष्ठ्यंत्या ध्यानिनो विशेषणे संयोज्याः कथंभूतस्य

ध्यानिनः ? 'जितेंद्रियस्य' जितानि स्वरूपोपयोगे क्षमानि पौद्गलिकवर्णादिष्वपरिणमनात् जितानि इंद्रियाणि येन सः तस्य, 'धीरस्य' स्ववीर्यसामर्थ्येन परीषहोपसर्गेऽकंपस्य, स्वरूपनिष्टस्य, पुनः 'प्रशांतस्य' कषायनोकषायोद्रेकरहितस्य धीरः शांत एव आत्मानमास्वादयति, पुनः 'स्थिरात्मनः' स्थिरः आत्मस्वरूपरमणे आत्मा यस्य सः, तस्य सुखासनस्य साधनपरिणतौ सुखमय आत्मा यस्य सः तस्य, पुनः नासाग्रे चापल्यरोधनाय 'न्यस्ते' स्थापिते नेत्रे येन सः तस्य योगिनः, सम्यग्दर्शनज्ञानचारित्ररत्नत्रयी परिणतस्य, रुद्धा बाह्येंद्रियानुसारिणी मनसः वृत्तिर्येन स तस्य, इंद्रियानुयायिमनोवृत्तिनिवृत्तस्य, कस्माद् ? ध्येये चित्तस्य स्थिरबंधनं धारणा तस्या धारा तया रयात् धारणाधारया रुद्धमनसः तत्वज्ञानं सुनिश्चितं भवति, पुनः 'प्रसन्नस्य' कालुष्यरहितस्य 'अप्रमत्तस्य' अज्ञानाद्यष्टप्रमादनिवृत्तस्य पुनः 'चिदानंदसुधालिह' चित् ज्ञानं तस्यानंद स एव सुधा अमृतं तां लिह्यतीति तस्य लिहः, ज्ञानानंदास्वादकस्य, एतादृशस्य ध्यानिनः आत्मिकसाम्राज्यानुभवं विस्तारयतः तुल्यत्वं केन भवति ? न केनापि । अतः सर्वपरभावपरित्यागरूपावलोकनतत्वैकत्वध्यानामृतस्वभोग्यभोक्तुः परमसाम्राज्यं । अतः सर्वप्रकारेण तदेव करणीयं । यदर्थं रचयंति यमनियमप्रचारान्, संकोचयंति शरीरं आसनमुद्रादिभिः, साधयंति रेचकपूरककुंभकप्राणायामान्, वसंति निर्जने वने, त्यजंतिसर्वेंद्रिय विषयान्, तत्साम्यसुखमूलं आत्मैकत्वोपयोगं साध्यं स्वहितार्थिभिः ॥ ६–८ ॥

इति व्याख्यातं ध्यानाष्टकम् ॥ ३० ॥

## अथ तपोष्टकम् ॥ ३१ ॥

अथ तपोऽष्टकं वितन्यते । तत्र पौद्गलिकसुखाभिलाषरंकाणां यत्कष्टक्षमणं, अथवा लोकसंज्ञाभीतानां पराधीनानां दीनतया आहारत्यागरूपं न तपः, आश्रवमूलत्वेन कषायोदयाश्रितत्वात् कर्मबंधकत्वाच्च । पूर्वांतरायोदयासातावेदनीय विपाक एव श्रीप्रज्ञापनावृत्तौ निरूपित एव, आचारांगचूर्णौ चापि "अंगत्थसुत्तं सव्वमविविवागं" इति वचनात्, अतोऽभिनवेंद्रियसुखाभिलाषरहितस्य निर्मलात्मद्रव्यसाधकस्य कष्टाचरणं तप इति, अत्र पंचवस्तुके "उपवासादिषु असातानिर्जरेति भोजने सातानिर्जरा साम्ये उपवासादिकरणं किमर्थ मिति" ? तत्रोच्यते भोजनादिषु षट्कायपलिमंथः उपवासे च तदभावात् अशुभनवकर्मबंधाभावे संवरपूर्वकसकामनिर्जरामूलत्वात् हितं, तथा चास्यात्मनः सातविपाके सरागहेतुत्वेन इष्टसंयोगैकता अन्नादिसहजपरिणमनात् आतापनादिषु कर्मविपाकोपयोगत्वे तथा परिणमनात् असंगताकारणत्याग एव साधनमूलं च भरतादयः निदर्शनं, तच्चाल्पकालसाधनासिद्धिवतां, नहि चिरकालसाधनावतां सातादि। शुभसंनिकर्षे अव्यापकत्वपरिणामः । उक्तं च विशेषावश्यके । "रतिक्षमत्वात्कल्पानां तेनातापनादिकरणमुचितं मुनीनां" । निक्षेपनयानां व्याख्या तु—नामतपः स्थापना तपः सुगमं द्रव्यतपः आहारत्यागादि, भावतपः आत्मस्वरूपैकाग्रत्वरूपं, अत्र द्रव्यपूर्वकभावतपोग्रहणमिति ।

**ज्ञानमेव बुधाः प्राहुः, कर्मणां तापनात्तपः । तदाभ्यंतरमेवेष्टं, बाह्यं तदुपबृंहकम् ॥ १ ॥**

व्या० ज्ञानमेवेति, बुधाः पंडिताः 'कर्मणां' आत्मप्रदेशसंश्लिष्टानां तापनात् तीक्ष्णं ज्ञानं एव तपः प्राहुः, तत्तपः

आभ्यंतरं अंतरंगं प्रायश्चित्तादिकं इष्टं बाह्यं अनशनादिकं तदुपबृंहकं आभ्यंतरतपोवृद्धिहेतु, द्रव्यनिक्षेपस्य कारणरूपत्वात्, द्रव्यतपसोऽपि भावतपसः कारणत्वमेव तेन इष्टं ॥ १ ॥

**आनुश्रोतसिकी वृत्तिर्बालानां सुखशीलता । प्रातिश्रोतसिकी वृत्तिर्ज्ञानिनां परमं तपः ॥ २ ॥**

व्या० आनुश्रोतसिकीति—संसार प्रवाहपद्धतिः अनादि प्रवृत्तिः आनुश्रोतसिकी वृत्तिः बालानां मूढानां 'सुखशीलता' इंद्रियसुखमग्नता, सुखाभिलाषता 'प्रातिश्रोतसिकी' प्रवाहसंमुखता, संसारसंमुखत्वमपहाय संसारपराङ्मुखी प्रवृत्तितदेव परमं तपः ज्ञानिनामुक्तमिति, आत्मधर्मानुगसंसारप्रतिकूलप्रवृत्ति स्तप उच्यते, इत्यनेन प्रायश्चित्तादिभावतपः परिणामः स्वरूपतन्मयत्वं तत्तपसा एव सकलकर्मक्षयः ॥ २ ॥

**धनार्थिनां यथा नास्ति, शीततापादि दुस्सहम् । तथा भवविरक्तानां, तत्वज्ञानार्थिनामपि ॥ ३ ॥**

व्या० धनार्थिनामिति–यथा धनार्थिनां शीततापादि दुस्सहं नास्ति, धनोपार्जनकुशलाः शीतादिकं सर्वमपि क्षमंते, तथा तत्त्वज्ञानार्थिनां भवविरक्तानां अनशनादिकं तपः न दुस्सहं, कार्यार्थी कारणे न प्रमाद्यति, अतः परमानंदकार्यकर्त्ता अनशनादितपः कष्टानुष्ठाने न दुस्सहत्वं मन्यते ॥ ३ ॥

**सदुपायप्रवृत्तानामुपेयमधुरत्वतः । ज्ञानिनां नित्यमानंदवृद्धिरेव तपस्विनाम् ॥ ४ ॥**

व्या० सदुपायेति 'तपस्विनां' तीव्रतपोमग्नानां साधिकषण्मासातं सर्वाहारपरिहारातापनाकायोत्सर्गादिजिनकल्पपरि-

हारविशुद्धि 'मुनीनां' ज्ञानीनां सूक्ष्मानंतस्वपरपर्यायविवेकमङ्गीकृतचैतन्यानां 'तपसि' परीपहादौ वननदीगह्वरवासेऽपि आनंदवृद्धिरेव । तथाहि—कश्चिद् धर्मिणः (धर्मी) प्राप्तद्रव्योपचयः उत्तमर्णाय द्रविणं ददत् आत्मानं धन्यमेव मन्यते, अथवा लब्धिसिद्ध्यर्थी पूर्वसेवायां उद्बाहुः अधोमुखादिमहाकष्टानुष्ठानमपि तत्सिद्धिसाध्याभिलाषी, यथात्यंतकष्टं चेष्टते तथा हर्षमेति एवं परमानंदाव्ययशुद्धात्मसिद्धिसाधनार्थी तद्विघात ककर्मक्षयाय तपःकष्टादिषु आत्मानमानंदयति, कुत ? इत्याह—उपमेयमधुरत्वतः, 'उपमेयस्य मोक्षस्य निर्मलाव्ययपदस्य यन्मधुरत्वं माधुर्यं तस्मात्, सिद्धिमाधुर्यरतस्य तत्साधनोपायभूतं निष्परिग्रहत्वादि सर्वं हितं जानाति, कथंभूतानां तपस्विनां ? 'सदुपायप्रवृत्तानां, सन् शोभनः उपायः साधनं संवरनिर्जरारूपं तत्र 'प्रवृत्तानां' उद्यतानां, इत्यनेन स्वधर्मसाधने साधूनामानंदः न दुःखं, यस्य साधनेकष्टत्वबुद्धिः स न साधकः उक्तं च षोडशके ॥ ४ ॥

इत्थं च दुःखरूपत्वात्तपो व्यर्थमितीच्छताम् । बौद्धानां निहता बुद्धिर्बौद्धानंदापरिक्षयात् ॥ ५॥

व्या० इत्थं चेति, इत्थं यत्तपः कष्टं इति भासनपूर्वकं तत्तपः 'व्यर्थं' निःफलं, कस्मात् ? दुःखरूपत्वात् तपःकरणे एव दुःखोद्वेगौ यत्र नादरः स कथं हिताय भवति । तथा 'इच्छतां' इति परभावसुखं इच्छतां वांछतां बौद्धानां बुद्धिः 'निहता' निश्चयेन हता, कस्मात् "बौद्धानंद" 'बौद्धं ज्ञानं तस्य आनंदः तस्य परिक्षयः तस्मात् ज्ञानानंदधाराक्षयात् कष्टरूपं तपः निष्फलं ॥ ५ ॥

यत्र ब्रह्म जिनार्चा च, कषायाणां तथा हतिः । सानुबंधा जिनाज्ञा च, तत्तपः शुद्धमिष्यते ॥ ६ ॥

व्या० यत्र ब्रह्मेति, यत्र यस्मिन् तपसि 'ब्रह्म' मैथुनत्यागः विषयानभिष्वंगः अस्ति यत्र जिनानां 'पूजा' तत्त्वभक्ति वर्त्तते पुनः यत्र 'कषायाणां' क्रोधादीनां 'हृतिः' नाशः, च पुनः यत्र 'जिनाज्ञा' श्रीवीतरागोक्तप्रवचनपद्धतिः 'सानुबंधा' सापेक्षा तत्तपः शुद्धं इष्यते। भावना च प्रथमं इंद्रियाभिलाषनिरासे शांतपरिणत्या सिद्धांतोक्तविधिना निरभिलाषस्य तपः विशुद्धं भवति, अन्नादिपरभावसुखस्पृहया किं केन न कृतं कष्टानुष्ठानं ? यच्च स्वरूपनिरावरणार्थं निःसंग निर्मोह-तत्त्वैकत्वरूपं व्याघातकपरभावाहारादिग्रहणनिवारणलक्षणं तपः श्रेष्ठमिति। उक्तं च।

निरणुट्ठाणं मयमोहरहियं सुद्धतत्तसंजुत्तं। असब्भभावणा एवं तवं कम्मसुयहेउ (?) ॥ १ ॥ ६ ॥

**तदेव हि तपः कार्यं, दुर्ध्यानं यत्र नो भवेत्। येन योगा न हीयंते, क्षीयंते नेंद्रियाणि वा ॥ ७ ॥**

व्या० तदेव हीति—'ही' ति निश्चितं, तदेव तपः 'कार्यं' करणीयं यत्र 'दुर्ध्यानं पुद्गलाशंसारूपमनिष्टतारूपं नो भवेत् येन तपसा 'योगाः' मनोवाक्कायरूपा 'न हीयंते' स्वरूपरमणं तत्वानुभवतः न हीयते, यत्र इंद्रियाणि न 'क्षीयंते': धर्मसाधस्वाध्यायाहिंसादि तत्कार्यप्रवृत्तिर्न 'क्षीयते' क्षयं न लभते, इत्यनेन साधनाभूतचेतनावीर्याणां हानिः न स्यात्, तत्तप शुद्धं 'कार्यं' कर्त्तव्यं इति ॥ ७ ॥

**मूलोत्तरगुणश्रेणिप्राज्यसाम्राज्यसिद्धये। बाह्यमाभ्यंतरं चेत्थं, तपः कुर्यान्महामुनिः ॥ ८ ॥**

## इति तपोऽष्टकम् ॥ ३१ ॥

व्या० मूलोत्तरगुणेति 'महामुनिः' परमनिर्ग्रंथः इत्थं तपः कुर्यात् किंभूतं तपः ? "मूलोत्तरगुणश्रेणिप्राज्यसाम्राज्य-

सिद्धये" मूलोत्तराः मूलभूता ज्ञानचारित्रादयः गुणाः 'उत्तराः' समितिगुप्त्यादयः गुणाः तेषां 'श्रेणिः' गुणप्राग्भावरूपा तया 'प्राज्यं' प्रचुरं यत् 'साम्राज्यं' प्रभुत्वं तस्य 'सिद्धिः' निष्पत्तिः तस्यै इत्यनेन स्वकीयगुणप्रभुत्वनिष्पत्त्यर्थं बाह्यं लोकोल्लासकारणत्वात् प्रभावकतामूलं आभ्यंतरं अन्यलोकैः ज्ञातुमशक्यं स्वगुणिकतारूपं च तपः कार्यं ॥ ८ ॥

इति व्याख्यातं तपोऽष्टकम् ॥ ३१ ॥

## अथ सर्वनयाश्रयणाष्टकम् ॥ ३२ ॥

तपः द्विविधं संवरात्मकं ( ज्ञानात्मकं च ) तत्र संवरात्मकं ज्ञानचारित्रयोः तीक्ष्णत्वं सचेतनावीर्यादीनां स्वरूपकैकत्वं, द्वितीयं तु ज्ञानचारित्रवीर्यभोगगुणसंकरसंभवं गुणास्वादैकत्वानुभववत् सर्वपरभावास्पृहतारूपं, जघन्यतः अंशत्यागपूर्वकदेशतोऽनीहागुणैकत्वं, उत्कृष्टतः शुक्लध्यानचरमाध्यवसायलक्षणं, परभावाववबोधो दुर्लभः असंख्येयसमयेनापि देशज्ञायकत्वात्, तस्य ज्ञानं गौणमुख्यतारूपेण प्रवर्त्तते । उक्तं च तत्वार्थे—"अर्पितानर्पितसिद्धेः" सूत्रस्य व्याख्याने, सर्वज्ञानां तु सर्वमपि एकसमयेनैव ज्ञातत्वात् न गौणमुख्यताज्ञानं वचसि क्रमवर्त्तित्वात् भवति, एवं न्यूनशक्त्या गौणमुख्यत्वं न रागद्वेषपरिणत्या रागद्वेषपरिणामो बंधहेतुः, अतः नयस्वरूपेण यथार्थबोधाय वस्तुविवेचनं हितं नरक्तद्विष्टता तेन ज्ञानसाम्यं करणीयं ज्ञानसाम्यमेव चारित्रं तदर्थमेव निरूपयति ।

**धावंतोऽपि नयाः सर्वे, स्युर्भावे कृतविश्रमाः । चारित्रगुणलीनः स्यादिति सर्वनयाश्रितः ॥ १ ॥**

व्या० धावंतोऽपि नया इति, सर्वे नयाः 'धावंतः' स्वस्वपक्षस्थापनपुरःसरा अपि 'भावे' शुद्धात्मधर्मणि कृतवि-

श्रामाः स्युः स्थिरा भवंति, अतः मुनिः 'चारित्रगुणलीनः' चयरिक्तीकरणं चारित्रं तदेव गुणः तत्र लीनः वर्द्धमानपर्यायः 'सर्वनयाश्रितः' स्यात् द्रव्यनये कारणग्राहके भावनये तत्कार्यत्वग्राहके क्रियानये साधनोद्यमरूपे ज्ञाननये तद्विश्रामरूपे 'आश्रितः' आसक्तः स्यात् भवेत् इत्यर्थः । उक्तं चानुयोगद्वारे ।

सव्वेसिं पि नयाणं वहुविहवत्तव्वयं निसामित्ता । जं सव्वनयविसुद्धं तं चरणगुणट्ठिओ साहू ॥ १ ॥

अत उक्तं श्रीभगवतीटीकायां—"जइ जिणमयं पवज्जह, ता मा विवहारनिच्छए मुयह । ववहारनओ च्छेए-तित्थुच्छेओजओभणिओ ॥ १ ॥

पुनस्तदेव दृढयति ।

**पृथग्नया मिथः पक्ष–प्रतिपक्षकदर्थिताः । समवृत्तिसुखास्वादी, ज्ञानी सर्वनयाश्रितम् ॥ २ ॥**

व्या०—पृथग्नया, इति एते मिथः परस्परं पृथग् भिन्नं भिन्नं पक्षप्रतिपक्षकदर्थिताः वादप्रतिवादकदर्थनाविडंविताः नयाः दुर्नया इत्यर्थः अत एव ज्ञानी यथार्थभासनया सर्वनयाश्रितः सर्वनयमार्गसापेक्षावबोध मग्नः भवति कथंभूतः ज्ञानी समवृत्तिः इष्टानिष्ठता तस्याः सुखास्वादनशीलः । उक्तं च ।

अन्योऽन्यपक्षप्रतिपक्षभावाद्यथा परे मत्सरिणः प्रवादाः ।
नयानशेषानविशेषमिच्छन्, न पक्षपाती समयस्तथा ते ॥ १ ॥
उदधाविव सर्वसिंधवः समुदीर्णास्त्वयि नाथ ! दृष्टयः ।

न च तासु भवान् प्रदृश्यते प्रविभिन्नासु सरित्स्विवोदधिः ॥ २ ॥

तथा च संम्मतौ "ण य तइओ अत्थि नओ, ण य सम्मंणएसु पडिपुन्नं । जेण दुवे एगंता, विभज्जमाणा अणेगंता ॥ १ ॥ जहए तह अणेपत्ते दुणयाणया सबेहं दिदुमूलणपाणं पन्नेयविसेसियं बिंति (?) ॥ २ ॥ सर्वनयस्स वास्वादनलोलाशुद्धपरिणाममप हाय स्वरूपानंदमग्नतारूपं करणीयं, अभिनवकर्माग्रहणरूपः संवरः पूर्वसत्तागतादिकर्मनिर्जरणात्मकं तपः, तपसा हि देवादिफला भिलाप एव न युक्तः निर्जरात्मकेन कथं शुभबंधः यच्च तपोविद्धिः देवायुः प्रभृति निबद्धं तच्च शोकरागादिप्रशस्ताध्यवसाय हेतुकमिति, अपूर्वतः सर्वकर्मापगमप्रादुर्भूतानां तद् ज्ञानं दर्शनसिद्धिसुखं तस्योत्सर्ग कारणं तप आध्यात्मिकं परभावशून्यस्वभावैकत्वानुभवतीक्ष्णलक्षणं परमं साधनमिति, व्याख्यातं तपोऽष्टकं । तद् व्याख्याने च साधनस्वरूपमपि व्याख्यातं । अथानेकनयात्मके जैनमार्गे एकांतता पक्षपातपरित्यागेन सर्वनयेषु समभावरूपपरिणामः रागद्वेषाभावलक्षणः स्वस्वस्थानसाधनविज्ञानरमणाध्यवसायः कार्यः । एकांतग्रह एव मिथ्यात्वं । सर्वत्र सापेक्षता सम्यग्दर्शनं तच्च—यथार्थोपयोगिनां यथार्थप्रवृत्तिमतां च भवति, अतः एकताग्रहत्यागसर्वनयसमाश्रयणोपदेशकं द्वात्रिंशत्तममष्टकमुवाच श्रीमद्यशोविजयोपाध्यायः परमरहस्यज्ञाता । अरे नास्ति धर्मः बाह्य पद्धत्या निमित्तकारणरूपा सा श्रीपंचमांगे प्राणातिपातसंवरादयः सर्वे अमूर्त्ता जीवस्वरूपा उक्ताः, येन हि जीवस्वभावरूपः शुद्धनिर्विकल्परत्नत्रयीलक्षणः धर्मः प्रतीतः स एव सम्यग्दृष्टिः, नहि कुशकासावलंबनेन समुद्रतरणं भवति । उक्तं च श्रीहरिभद्रपूज्यैः

आयप्पभवं धम्मं, आयतियं अप्पणो सरूवं च । दंसणनाणचरित्तेगत्तं जीवस्स परिणामं ॥ १ ॥

रे भव्य ! हिताय वदामः सर्वागमेषु धर्म आत्मनः शुद्धा परिणतिरेव, निमित्तस्योपादानप्राकट्यहेतुत्वात् बाह्याचरणादिकं साधकैरभ्यस्यते, तथापि धर्महेतुत्वेनोपादेयं श्रद्धावद्भिः, तत्स्वात्मक्षेत्रव्यापकरूपानंतपर्यायलक्षणं धर्मः उत्तराध्ययनावश्यकादिसर्वसिद्धांताशयः इति तत्वं रागद्वेषरहितानां भवति, रागद्वेषाभावपरिणतेषु गौणमुख्यतारूपपरिहारः समः साध्यः, पूर्वं मिथ्यात्वोदयेन मुख्ये मुख्यत्वबोधपूर्वकैकांतवादः स च सम्यग्दर्शनेन कारणकार्यतया अयं मुख्यश्चायं गौणः, नह्यनंतपर्यायात्मके केवलवस्तुनि कस्यापि स्वपर्यायस्य गौणमुख्यत्वे क्षयोपशमज्ञानेन सर्वधर्माणां—

एकसमूहम्मि विणि छिणउ उभयवायपणवओ । मूलण घाणओ आणं पत्तेय विसेसियं बिंति ॥ १ ॥

तम्हा सव्वेवि णया, मिच्छदिट्ठी सपक्ख पडिबद्धा । अणोण्यनिस्सिया पुण, हवंति सम्मत्तसब्भावा ॥ २ ॥

इत्यादि ॥ २ ॥

साम्यतां कथयन्नाह ।

**नाप्रमाणं प्रमाणं वा सर्वमप्यविशेषितम् । विशेषितं प्रमाणं स्यादिति सर्वनयज्ञता ॥ ३ ॥**

व्या० नाप्रमाणमिति—सर्वं वाक्यं एकांते (न) न अप्रमाणं, न वा अथवा प्रमाणं अपि, न विधिनिषेधोपदेशः, प्रथमं तदेवं प्रमाणं गुणवृद्धौ ध्यानलीनानां तदेवाप्रमाणं, यच्चानेषणीयादिकं पूर्वमप्रमाणं तदेव गीतार्थादिषु प्रमाणं भगवतीटीकातो ज्ञेयं तथापि गाथा ।

परमरहस्समिसीणं, सम्मत्तगणिपिडगझरिअसाराणं । परिणामिअं पमाणं, निच्छयमवलंबमाणाणं ॥ १ ॥

पंचवस्तुटीकायां—"एसणमाई तेणुयोगा" इत्यादि सर्वमप्यविशेषितं, अन्यसमयस्थं सद्वचनं विशेषरहितं, विशेषणं, संयोजितं प्रमाणं स्यात्, विषयपरिशोधकनययोजितं प्रमाणं स्यात् उपलक्षणात् स्वसमयवचनमपि अननुयोगोक्तमप्रमाणं भवति, पंचमांगे मंडुकश्रावकाधिकारतो ज्ञेयं । उक्तं च

सुतत्थो खलु पढमो, बीओ निज्जुत्तिमीसिओ भणिओ । तईओ अ निरविसेसो एस विही होइ अणुओगे ॥ १ ॥

अनुयोगशून्यं वचनं न प्रमाणं भवति । उक्तं च ।

अपरिछिअसुअणिहसस्स, केवलमभिन्नसुत्तचारिस्स । सव, ज्जुमेण विकय अन्नाण भवे वहुं पडइ ॥ १ ॥

पुनः हेमाचार्यैः ।

तत्रापि न च द्वेषः, कार्यो विषयस्तु यत्नतो मृग्यः । तस्यापि सद्वचनं, सर्वं च यत्प्रवचनादन्यत् ॥ १ ॥

इति विचार्य स्याद्वादोपयोगिसर्वनयज्ञता कार्या पुनः साम्यमवलंबनीयं पक्षपरिहारेण आत्मधर्मनिष्ठता हिता ॥ ३ ॥

**लोके सर्वनयज्ञानं, ताटस्थ्यं वाप्यनुग्रहः । स्यात्पृथङ्नयमूढानां, स्मयार्त्तिर्वाप्यतिग्रहः ॥ ४ ॥**

व्या० लोके सर्वेति—'लोके' दक्षजनसमूहे 'नयज्ञानां सर्वनयरहस्यविज्ञानां 'ताटस्थ्यं' तटस्थत्वं पार्श्ववर्त्तित्वं, 'वा इति व्यवस्थायां । 'अपि' समुच्चये, 'अनुग्रहः' उपकाराय भवति, सर्वत्र परीक्षकत्वं हितं, पृथङ्नयमूढानां एकैकनयपक्षग्रहवर्त्तिनां स्मयार्त्तिः मानोन्मादपीडा वा अथवा अतिग्रहः कदाग्रहः स्यात् भवति । उक्तं च ।

कालो सहावनियइ, पुव्वकयं पुरिसकारणे पंच । समवाये सम्मत्तं, एगंते होई मिच्छत्तं ॥ १ ॥

अत्र पुरुषाकारस्य उपादानकारणत्वात् मुख्यत्वं, कालस्वभावपूर्वकृता तु निमित्तासाधारणापेक्षया कारणत्वं, नियतेश्च कारणत्वं औपचारिकं, अस्या अनित्यत्वं विचारामृतसंग्रहे उक्तमस्ति, इति नियतपक्षोपजीविकानां मिथ्याग्रहरूपः न जैनानां, एवं अंशस्यापि जैनमार्गे विवक्षितत्वात् समुच्चयवचनं ॥ ४ ॥

एवं सापेक्षा श्रद्धा कार्या इत्युपदिशन्नाह ।

**श्रेयः सर्वनयज्ञानं, विपुलं धर्मवादतः । शुष्कवादविवादाच्च, परेषां तु विपर्ययः ॥ ५ ॥**

व्या० श्रेयः सर्वेति—धर्मवादतः कंठताल्लुशोषणमात्रः शुष्कवादः यथार्थताशून्यः कषायोपष्टंभत्वात् त्याज्यः, परपक्षपराजयबुद्ध्या स्वपक्षस्थापनपुरःसरः विवादः, सोऽपि हेयः, तत्वज्ञानी परस्परतत्वावबोधाय तत्त्वार्थिनं प्रति यद्वदति स धर्मवादः, सर्वनयज्ञानवान् धर्मवादतः वक्ता तत्वकथनरसिकः, इति श्रोता च तत्वज्ञानरसिक उभयोर्यथार्थयोगे धर्मकथनतः विपुलं श्रेयः कल्याणं, यदि च न श्रोता तादृक् तथापि तत्वबोधनेच्छया धर्मकथनं हिताय, च पुनः शुष्कवादात् च पुनः विवादात् परेषां एकांतदृष्टीनां विपर्ययः अश्रेयः अकल्याणं, सूक्ष्मार्थकथनं पात्रयोग्यतया धर्महितकरणं तु भावानुकंपा ॥ ५ ॥

अथ सन्मार्गप्रशंसनामाह ।

**प्रकाशितं जनानां यैर्मतं सर्वनयाश्रितम् । चित्ते परिणतं चेदं, येषां तेभ्यो नमो नमः ॥ ६ ॥**

व्या० प्रकाशितमिति—यैः सर्वज्ञाचार्योपाध्यायैः सम्यग्दर्शनज्ञानचारित्रपरिणतैः श्रीहरिभद्रादिभिः संविग्नपा

ार-
॥

क्षिकैः यथार्थोपदेशकैः सर्वनयाश्रितं सर्वनयसापेक्षं स्याद्वादगर्भितं मतं इष्टं शासनं मोक्षांगरूपं प्रकाशितं तेभ्यो नमः शुद्धोपदेशका एव विश्वे पूज्याः उक्तं च भवभावनायां ।

भद्दगवहुस्सुआणं, बहुजणसंदेहपुच्छणिज्जाणं । उज्जोइअभुवणाणं, झाणंमविकेवलं मयंके ॥ १ ॥
ते पुज्जाजिअलोए, सव्वत्थविजाण निम्मलं नाणं । पुज्जाणविज्जयरा नाणी चारित्तजुत्ताय ॥ २ ॥

तथा उपदेशमालायाम् ।

सावज्जजोगपरिपरिवज्जणाओ, सव्वुत्तमो जइधम्मो । बीओ सावगधम्मो, तइओ संविग्गपक्खपहो ॥ १ ॥
सुज्झइ जई सुचरणो, सुज्झइ सुस्सावगोवि गुणकलिओ । ओसन्नचरणकरणो, सुज्झइ संविग्गपक्खरुइ ॥ २ ॥
संविग्गपक्खियाणं, लक्खणमेयं समासओ भणिअं । ओसन्नचरणकरणावि, जेण कम्मं विसोहंति ॥ ३ ॥
सुद्धं सुसाहुधम्मं, कहेइ निंदईयनियमायारं । सुतवस्सियाण पुरओ, होई सव्वोमरायणिओ ॥ ४ ॥
वंदई नय वंदावई, किइकम्मं कुणइ कारवइ नेव । अतट्ठानंवि दिक्खई, देई सुसाहूण बोहेउं ॥ ५ ॥

इत्यादि गुणोपेतैर्यदुपदिष्टं तत्सत्यं, च पुनः इदं स्याद्वादगर्भिततत्वधर्मस्वरूपं येषां चित्ते परिणतं श्रद्धानभासनरमणादरतया व्याप्तं तेभ्योऽपि नमः, प्रणामोऽस्तु, सर्वज्ञोक्तमार्गानुसारिणोऽपि धन्याः, किं तत्परिणामपरिणतानां नमः सर्वज्ञशासनाय नमः सर्वज्ञमार्गवर्त्तिपुरुषसंघाय ॥ ६ ॥

**निश्चये व्यवहारेच, त्यक्त्वा ज्ञाने च कर्मणि । एकपाक्षिकविश्लेषमारूढाः शुद्धभूमिकाम् ॥ ७ ॥**

अमूढलक्ष्याः सर्वत्र, पक्षपातविवर्जिताः । जयंति परमानंदमयाः सर्वनयाश्रयाः ॥ ८ ॥

व्या० निश्चय इति अमूढलक्षा इति—एवं विधाः पुरुषाः 'जयंति' सर्वोत्कर्षेण वर्त्तते इति, कथंभूताः पुरुषाः ? 'निश्चये' शुद्धात्मपरिणतिरूपे, च पुनः—'व्यवहारे' वीर्यप्रवर्त्तनरूपे, च पुनः—'ज्ञाने' उपयोगलक्षणे, 'कर्मणि' क्रिया-पक्षे, 'एकपाक्षिकं विश्लेषं' एकांतग्रहरूपं भ्रमस्थानं 'त्यक्त्वा' अपहाय शुद्धभूमिकां ज्ञानपरिपाकरूपां भूमिकां आरूढाः प्राप्ताः ज्ञानानुभवस्थानस्थाः पुनः अमूढलक्ष्या लक्ष्यं वेध्यं अथवा—अक्ष्यं शुद्धात्मस्वरूपं तत्र 'अमूढाः' मूढतार-हिता अमूढाः 'लक्ष्ये' तत्स्वरूपे ये ते सर्वत्र जीवाजीवेष्टानिष्टवस्तुनि पक्षपातः एकांतताग्रहरूपः तेन 'विवर्जिताः' रहिताः अमूर्त्तः आनंदो येषां ते तन्मयाः सर्वे च ते नयाश्च सर्वनयाः तेषां 'आश्रयाः' आधाराः सर्वनयाश्रयाः, एवं स्वरूपाः पुरुषाः जयंति सम्यग्दर्शनादिगुणपूर्णा, इत्यनेन स्वसत्ताधर्मसाधनोद्यतस्वकायचेतनादिपरिणतिरूपचक्रस्य साधनव्यापारप्रवृत्तस्य प्रेरकाः समस्तपरभावप्रसंगवर्जिताः स्याद्वादनयमार्गोपलक्षितयथार्थवस्तुस्वरूपा आचार्योपा-ध्यायाः जयंति, विश्वविश्वव्यामोहनिवारणप्रवणवाक्यामृतदाननिरस्तानादिमोहकालकूटाः स्वतत्त्वानंतसंपद्विलास-कलिताः निर्ग्रंथा अपि महाराजाः असंगा अपि, अनंतगुणसंधारणाव्याप्ताः निराकुला अपि, स्वतत्वसाधनव्याकुलाः वनवासिनोऽपि स्वपर्यायमकरंदपानमग्नाः श्रीमत्सर्वज्ञोक्ताज्ञानिर्वाहधौर्याः, मार्गानुसारिणोऽपि, यथाशक्तिगुणप्रवर्द्धन नि-बद्धलक्षाः द्रव्यभावसाधनेन शुद्धपरमात्मसाध्यदत्तदृष्टयः ते एव ज्ञानसारग्रहणकुशला इति ॥ ७॥ ८ ॥

इति सर्वनयाश्रयणाष्टकं व्याख्यातं ॥ ३२ ॥

( द्वात्रिंशदष्टकविवरणं निरूपितम् )

सांप्रतमुपसंपहाराय सर्वाष्टकानां भावनाभिधानकथनं निर्दिशति ।

**पूर्णो मग्नः स्थिरोऽमोहो, ज्ञानी शांतो जितेंद्रियः । त्यागी क्रियापरस्तृप्तो, निर्लेपो निःस्पृहो मुनिः ॥१॥**

व्या० पूर्ण इति—अनादिपरभावानंतग्रासग्रसनेऽप्ययं जीव तृष्णाव्यापृतत्वादपूर्ण एव सस्वरसास्वादनेन स्वतत्वानंतकपूर्णः तदास्वादाबाधादिसर्वगुणनिष्पत्तौ पूर्ण इति पूर्णत्वस्वरूपाभिधायकं प्रथमाष्टकं । यः पूर्णः स एव मग्नः, तदनुभवलीनः स एव लीनतायाः स्वरूपे भवति, परभावलीनता हि अनंतसंसारभ्रमणमूलं, अत एव सा मग्नता अनादीना त्याज्या या स्वरूपमग्नता सा एव मग्नता, तत्प्रतिपादनारूपं द्वितीयाष्टकं । यः मग्नः स स्थिरो भवति, न्यूनस्य ग्रहणेच्छया चापल्यं, पूर्णस्य ग्राह्याभावात् स्थैर्यं ( अतः स्थिराष्टकं ) यः स्थिरः स अमोहः, मोहरहितः ( अतः अमोहाष्टकं ) मोहरहितस्यैव तत्वज्ञता भवति, तेन तत्वज्ञानाष्टकं पंचमं । यः ज्ञानी स शांतः उपशमवान् भवति अतः शमाष्टकं । यः शांतः स एव इंद्रियाणि जयति अतः इंद्रियजयाष्टकं । यः इंद्रियविजयी स एव त्यागी परभावपरिहारी भवति च त्यागीः ( अतः त्यागाष्टकं ) स एव वचनानुक्रमतोऽसंगः क्रियारहितः भवति अतः क्रियाष्टकं । उक्तं च ।

बांधवधनेंद्रियत्यागात्त्यक्तभयविग्रहः साधुः । त्यक्तात्मा निर्ग्रंथस्त्यक्ताहंकारममकारः ॥ १ ॥

इत्युक्तलक्षणः अत एव तृप्तः आत्मसंतुष्टः तेन तृप्त्यष्टकं । यस्तृप्तः स निर्लेपः रागादिलेपरहितः तेन निर्लेपाष्टकं । निर्लेपः निःस्पृहो भवति तेन निःस्पृहाष्टकं । ( यः निःस्पृहः स मुनिः मौनवान् भवति तेन मौनाष्टकं ) ॥ १ ॥

विद्याविवेकसंपन्नो, मध्यस्थो भयवर्जितः । अनात्मशंसकस्तत्त्वदृष्टिः सर्वसमृद्धिमान् ॥ २ ॥

व्या० विद्येति, पुनः 'विद्याविवेकसंपन्नः' विद्या श्रुताभ्यासः । विवेकःस्वपरविभजनात्मकः । ताभ्यां संपन्नः तत्कथिते विद्याष्टकविवेकाष्टके । यो हि विद्याविवेकसंपन्नः स मध्यस्थः इष्टानिष्टे वस्तुनि रागद्वेषरहितोः भवति तेन माध्यस्थ्याष्टकं । मध्यस्थो हि भयरहितः तेन भयवर्जनाष्टकं । भयरहितस्य नात्मश्लाघा इष्टा इत्यनेन अनात्मशंसा भवति तन्निरूपणाष्टकं । यः लौकिकश्लाघाकीर्त्त्याद्यभिलाषरहितः स तत्वदृष्टिः तेन तत्वदृष्ट्यष्टकं यस्य तत्वदृष्टिः स एव समृद्धः परमसंपदावान् भवति तेन समृद्ध्यष्टकं ॥ २ ॥

ध्याता कर्मविपाकानामुद्विग्नो भववारिधेः । लोकसंज्ञाविनिर्मुक्तः, शास्त्रदृग् निःपरिग्रहः ॥ ३ ॥

व्या० ध्यातेति—यः समृद्धः स काले विचित्रविपाकोदये कर्मविपाकानां ज्ञाता ध्याता च भवति, अतः कर्मविपाकाष्टकं ॥ यः कर्मविपाकध्यानी स एव भवात् संसारात् उद्विग्नः भवति, अतएव भवोद्वेगाष्टकं ॥ यः भवोद्विग्नः स लोकसंज्ञामुक्तो भवति, तेन लोकसंज्ञात्यागाष्टकं ॥ स एव शास्त्रदृग् च पुनः निःपरिग्रहः भवति । अतएव तत्प्ररूपकाष्टकद्वयं । ( शास्त्राष्टकं परिग्रहाष्टकंच ) ॥ ३ ॥

शुद्धानुभववान् योगी, नियागप्रतिपत्तिमान् । भावार्चाध्यानतपसां भूमिः सर्वनयाश्रितः ॥ ४ ॥

व्या० शुद्धेति, यः निःपरिग्रहः स एव शुद्धात्मतत्वानुभववान् भवति, तेनानुभवाष्टकं ॥ यः स्वरूपानुभवी स एव योगी योगध्यानमयः, यः योगी स एव निश्चयेन कर्मयागकर्ता तत्प्ररूपकाष्टकद्वयं ॥ स एव भावार्चा भावपूजा तथा

ध्यानेन ध्येयैकत्वं तदेव तपः तेषां भूमिः स्थानं भवति, एतत्स्वरूपनिरूपकमष्टकत्रयं, ततः सर्वनयाश्रयणं सम्यग् ज्ञानं तत्प्ररूपकं द्वात्रिंशत्तममष्टकं ॥ ४ ॥

एवं कारणकार्यपूर्वकाधिकारद्वात्रिंश तू फलकोपेतं ज्ञानसारं नाम यानपात्रं यदारूढाः मिथ्याज्ञानभ्रमणभीषणं अतत्त्वैकतारूपजलगंभीरमसंयमपाथोधिमुल्लंघ्य सम्यग्दर्शनप्रतोलीमंडितं सम्यग्ज्ञाननिधानोपेतं सम्यक्चारित्रानंदास्वादमधुरं असंख्येयप्रदेशस्वसंवेद्यतत्ववेदकतासंपत्प्रवणं जिनप्रवचनप्राकारोत्सर्गापवादपरिखासंयुतं नियमनिक्षेपानेकगुणौघं लभंते स्याद्वादपत्तनं भव्या, इति ज्ञानसारफलोपदेशकं ग्रंथस्य मौलिरूपं अंत्याधिकारं श्रीमत्पाठकेंद्रं ॥ ४ ॥

**स्पष्टं निष्टंकितं तत्त्वं, अष्टकैः प्रतिपन्नवान् । मुनिर्महोदयं ज्ञानसारं समधिगच्छति ॥ ५ ॥**

व्या० स्पष्टं निष्टंकितमिति—'मुनिः' त्रिकालाविषयी अष्टकैः स्पष्टं शब्दप्रकरं तत्वं वस्तुधर्मं आत्मपरिणमरूपं 'निष्टंकितं' निर्द्धारितं 'प्रतिपन्नवान्' अंगीकृतवान् स मुनिः महोदयं' मोक्षरूपं 'ज्ञानसारं' ज्ञानस्य सारं 'चारित्रं' तथा 'परां मुक्तिं 'समधिगच्छति' प्राप्नोति । उक्तं च ।

सामाइ अमाईअं, सुअनाणं जावविंदुसाराओ । तस्सवि सारो चरणं, सारं चरणस्स निवाणं ॥ १ ॥

तं प्राप्नोति ॥ ५ ॥

**निर्विकारं निराबाधं, ज्ञानसारमुपेयुषाम् । विनिवृत्तपराशानां, मोक्षोऽत्रैव महात्मनाम् ॥ ६ ॥**

१ त्रुटितमत्रकिञ्चित् ।

व्या० निर्विकारमिति, महात्मनां सम्यग् आत्मभावपरिणतानां, 'अत्रैव' अस्मिन्नेव भवे मोक्षः यद्यपि सकर्मत्वमोक्षाभाव एव तथापि अत्रानंदसमताशीलानां स्वभावसुखलीनानां वर्णिकारूपेण मोक्षस्यारोपः कथितः कथंभूतानां महात्मनां ? निर्विकारं विकाररहितं निराबाधं सर्वा बाधा पुद्गलसंयोगरूपा तया रहितं ज्ञानं तत्त्वबोधः तस्य सारं तत्वैकत्वरूपं चारित्रं उपेयुषां प्राप्नुवतां, पुनः कथंभूतानां ? विनिवृत्ता निवृत्ता परस्य आशा येषां विनिवृत्तपराशानां, सर्वथा पुद्गलाशारहितानां निर्वांछकानां इहैव मोक्षः इति ॥ ६ ॥

**चित्तमार्द्रीकृतं ज्ञान–सारसारस्वतोर्मिभिः । नाप्नोति तीव्रमोहाग्निप्लोषशोषकदर्थनाम् ॥ ७ ॥**

व्या० चित्तमिति—ज्ञानसाराभिधं ग्रंथं तस्य 'सरस्वती वाणी तस्या इमे 'ऊर्मयः' कल्लोलास्तैः येषां चित्तं आर्द्रीकृतं' तेषां जीवानां तीव्रो मोहाग्नेः प्लोषः दाहः तेन यः शोषः तस्य कदर्थनां पीडनां नाप्नोति इत्यनेन ज्ञानसारासारवर्षणार्द्रीकृतचित्तानां मोहाग्नितापो न भवति ॥ ७ ॥

पुनस्तदेव कथयति ।

**अचिंत्या कापि साधूनां, ज्ञानसारगरिष्ठता । गतिर्ययोर्ध्वमेव स्यादधः पातः कदापि न ॥ ८ ॥**

व्या० अचिंत्येति, भो भव्य ! 'साधूनां' परमपदनिष्पादकानां कापि 'अचिंत्या' चिंतितुमशक्या ज्ञानसारगरिष्ठता अस्ति । 'ज्ञानं' यथार्थस्वपरावबोधः तस्य सारं चारित्रं वैराग्यं तस्य 'गरिष्ठता' गरिमा गुरुत्वं तत्स्वरूपमचिंत्यं दुर्विचारं अन्या गुरुता अधोगमनहेतुः ज्ञानगुरुत्वं ऊर्ध्वताहेतुः अतएवाचिंत्यमिति यथा गरिष्टतया ऊर्ध्वगतिरेव स्यात् अधःपातः

कदापि न भवति ऊर्ध्वता द्रव्यतः जीवेभ्य उच्चत्वगोत्रोदयादिरूपा, क्षेत्रतः ऊर्ध्वलोकगमनरूपा, भावतः सम्यक्त्वाद्युत्तरोत्तरगुणादौ रोहणरूपा, तेन यो ज्ञानगरिष्ठः स ऊर्ध्वत्वं स्वर्गापवर्गलक्षणं सम्यक्चारित्रादिगुणलक्षणं प्राप्नोति ॥ ८ ॥

पुनः ज्ञानक्रियाभ्यां मोक्षः न ह्येकस्यापि विरोधकः साधको भवति, क्रिया हि वीर्यविशोधिरूपा, ज्ञानं च चेतनाविशोधिरूपं चेतनावीर्ययोः शोधिप्राप्तयोः एव सर्वसंवरा तथापि क्रियातः ज्ञानस्याधिक्यं दर्शयति ।

क्लेशक्षयो हि मंडूकचूर्णतुल्यः क्रियाकृतः । दग्धतच्चूर्णसदृशो, ज्ञानसारकृतः पुनः ॥ ९ ॥

व्या० क्लेशक्षय इति—'ही' ति निश्चितं 'क्रियाकृतः' क्रियोद्यमविहितःक्लेशक्षयः मंडूकचूर्णतुल्यः ज्ञेयः, यथा मंडूकचूर्णः पुनः घनयोगतः तत्रानेकाभिनवमंडूकोत्पत्तिर्भवति, तथा—क्रियया अशुभकर्म क्षयति, तथापि शुभानां प्रचुरा वृद्धिः, पुनः शुभोपयो ( भो ) गकाले अशुभानां वृद्धिः इति ज्ञेयं । पुरा पूर्वं ज्ञानसारकृतः कर्मक्षयः दग्धतच्चूर्णसदृशः इति, इत्यनेन ज्ञानानंदकृतः कर्मक्षयः पुनः न प्रभवति, यथा—मंडूकचूर्णः दग्धो न मंडूकोत्पत्तिहेतुर्भवति, एतदुपदेशपदात्सर्वं ज्ञेयं, आगमेऽपि—"सीलं सेयं सुअं सेयं," इत्यालापकेन तथा पंचनिर्ग्रंथशतके मुनीनां अल्पश्रुतवतां आहारादिसंज्ञास्ति बहुश्रुतानां आहारादिसंज्ञानिषेध इति सर्वत्र योज्यं ॥ ९ ॥

ज्ञानपूतां परेऽप्याहुः, क्रियां हेमघटोपमाम् । युक्तं तदपि तद्भावं ,न यद् भग्नापि सोज्झति ॥ १० ॥

व्या० ज्ञानपूतामिति—'ज्ञानपूतां' ज्ञानेन पवित्रां क्रियां शुभयोगव्यायात्मकां 'हेमघटोपमां' सुवर्णकलशसदृशां, 'परेऽपि' अन्ययूथिका अपि आहुः, एतत् युक्तं तदपि हेमघटे भग्ने अपि तद्भावं हेममौल्यं न उज्झति, तथा सद्ज्ञान-

युक्ता क्रिया ततः पतितस्य भग्नस्यापि नाधिकस्थितिबंधः "बंधेण न वोलई कयावि" इति वचनात् । ज्ञानी क्रियायुक्तः स्थितिक्षयं करोति ततः पतितोऽपि तत् स्थितिस्थानं नातिक्रमति अतः ज्ञानपूर्वका एव । तथा च उपपातिकोपांगे-मिथ्यादृष्टिः एकांतेन द्रव्ययतिलिंगक्रियायुक्तः नवमग्रैवेयकांतं गच्छति, तथापि स्थितौ पूर्णबंधक एव सम्यग्दृष्टिप्रतिपत्तौ तत्पतितोऽपि मिथ्यात्वभावं गतोऽपि एककोटाकोट्यंतरस्थितिं बध्नाति नाधिकां बध्नाति अतः ज्ञानस्याधिकत्वं ॥१०॥

पुनः दृढयति ।

**क्रियाशून्यं च यद्‌ज्ञानं, ज्ञानशून्या च या क्रिया । अनयोरंतरं ज्ञेयं, भानुखद्योतयोरिव ॥ ११ ॥**

व्या० क्रियाशून्यमिति 'यद् ज्ञानं' तत्वाववोधः सत्स्वसंवेदनरूपं 'क्रियाशून्यं' द्रव्यक्रिया आश्रवरोधनात्मिकातया शून्यं च पुनः क्रिया 'ज्ञानशून्या' तयोः अंतरं भानुखद्योतयोरिव ज्ञेयं, भानुतुल्यं ज्ञानं, खद्योतप्रकाशतुल्या क्रिया ज्ञानशून्या ज्ञेया इति ॥ ११ ॥

**चारित्रं विरतिः पूर्णा, ज्ञानस्योत्कर्ष एव हि । ज्ञानाद्वैतनये दृष्टिर्देया तद्योगसिद्धये ॥ १२ ॥**

व्या० चारित्रमिति—'पूर्णा विरतिः' चारित्रस्य रूपरमणं तत् ज्ञानस्यैवउत्कर्षः 'ही' ति निश्चिनं ज्ञेयं ज्ञानस्य उत्कृष्टावस्था चारित्रं ज्ञानैकत्वं चारित्रं आत्मनः मूलव्याख्यायां ज्ञानदर्शनगुणद्वयमयत्वमेव । उक्तं च श्रीविशेषावश्यके । उववाई उपांगेऽपि—असरीराजीघणा उवउत्तादंसणेयनाणेहिं"(?) इत्यादिवचनात् । अतः ज्ञाने स्थिरत्वं चारित्रं ज्ञानस्यानंदसुखं ज्ञानप्रकर्षाववोधः सुखं इति भाष्योक्तेः तथा ज्ञानस्यास्वादनं भोगः एवं भावना पृथग्गुणानां भावनापि विशेषाः

वश्यके "यतः चारित्रज्ञानादयः पृथग्गुणा इच्छंति ।" इत्यादिकं तेन अत्रोपयोगमयस्यात्मनः ज्ञानं मुख्यं तेनोच्यते ज्ञानाद्वैतनये ज्ञानेचात्मज्ञानमेव साध्यं ज्ञाननिरावरणता सिद्धिः, एवं दृष्टिः देया, किमर्थं ? तद्योगसिद्धये, ज्ञानयोगस्य सिद्ध्यर्थं निष्पत्त्यर्थः अतः ज्ञानपूर्विका क्रिया हिता, तेन ज्ञाने स्पर्शाख्ये महान् अभ्यासो विधेयः, इति रहस्यं ज्ञान-त्यागे न सिद्धिः सर्वत्र साधने ज्ञानमेव प्रधानं इति ज्ञानसारस्यार्थितया भवितव्यं ॥ १२ ॥

अथ श्रीमद्यशोविजयोपाध्यायैः एतद् ज्ञानसाराभिधं शास्त्रं रचितं तत्क्षेत्रादिप्रतिपादकं वृत्तमुच्यते ।

सिद्धिं सिद्धपुरे पुरंदरपुरस्पर्द्धावहे लब्धवान्, चिद्दीपोऽयमुदारसारमहसा दीपोत्सवे पर्वणि ।
एतद्भावनभावपावनमनश्चंचच्चमत्कारिणां तैस्तैर्दीपशतैः सुनिश्चियमतैर्नित्योऽस्तु दीपोत्सवः ॥ १३ ॥

व्या० सिद्धिं सिद्धपुरे इति—अयं ग्रंथः सिद्धपुरे नगरे सूत्ररचनया सिद्धिं लब्धवान् 'उदारसारमहसा' प्रधानसारते-जसा 'दीपोत्सवे पर्वणि' दीपालिकादिने संपूर्णतां गतः, कथंभूतोऽयं ग्रंथः? 'चिद्दीपः' ज्ञानप्रदीपः एतद्भावनभावपावनमन-श्चंचच्चमत्कारिणां जीवानां एतस्य ग्रंथस्य भावनं भावना आत्मतन्मयता तस्या भावा अर्थप्राप्तसमध्यवसायाः तैः 'पावनं' पवित्रं 'मनः' चित्तं तत्र चंचन् मनोहारी चमत्कारो येषां ते तेषां तैः तैः निर्मलोपयोगलक्षणैः दीपशतैः सुष्ठु निश्चयो वस्तुधर्मः तस्य यद् ज्ञानं तदेव मतं इष्टं तैः तेषां ज्ञानचमत्कारिणां दीपोत्सवः नित्यः निरंतरः अस्तु भवतु, इत्यनेन यथार्थज्ञानगृहीतात्मरसमग्नानां नित्यं दीपोत्सव एवास्ति ॥ १३ ॥

केषां चिद्विषयज्वरातुरमहो चित्तं परेषां विषा—वेगोदर्ककुतर्कमूर्छितमथान्येषां कुवैराग्यतः ।
लग्नालर्कमबोधकूपपतितं चास्तेऽपरेषामपि, स्तोकानां तु विकारभाररहितं तद्ज्ञानसाराश्रितम् ॥ १४ ॥

व्या० केषां चिदिति—'अहो' इति आश्चर्ये, केषांचिज्जीवानां 'चित्तं' मनः 'विषया' इंद्रियाभिलाषाः एव ज्वरः तेन 'आतुरं' क्लिष्टं मनः अस्ति परेषां केषांचित् मनः 'विषावेग० इति विषस्य मिथ्यात्वस्य 'आवेगः' त्वरा तस्य 'उदर्कः' उदयः तेन 'मूर्छितं' व्याकुलीभूतं मनः अस्ति, अन्येषां जीवानां 'कुवैराग्यतः' दुःखगर्भमोहगर्भवैराग्यतः 'लग्नालर्क० लग्नः आलर्कः 'हडकवाय' इति लोकभाषा यस्य तत् मनः अस्ति । च पुनः अपरेषां कुगुरुवाहितानां कुबोधपतितं कुज्ञानपतितं मनः अस्ति, । तु पुनः विकारा इंद्रियकामाः तेषां भारः तेन रहितं ज्ञानसाराश्रितं ज्ञानसारं परमात्मस्वरूपं आश्रितं व्याप्तं मनः स्तोकानां अस्ति । इह खलु जगति कामोद्विग्नाः स्वरूपोपयोगलीनचित्ताः शुद्धसाध्यदृष्टयः पुरुषाः स्तोका एव ॥१४॥

पुनः ग्रंथभ्यासरूपं फलं दर्शयति ।

जातोद्रेकविवेकतोरणततेर्धावल्यमातन्यते, हृद्गेहे समयोचितः प्रसरति स्फीतश्च गीतध्वनिः ।
पूर्णानंदघनस्य किं सहजया तद्भाग्यभंग्या भवन्नैतद्ग्रंथमिषात्करग्रहमहश्चित्रश्चरित्रश्रियः ॥ १५ ॥

व्या० जातोद्रेकेति—'एतद्ग्रंथमिषात्' ज्ञानसारग्रंथाभ्यासव्याजात् चारित्रश्रियः 'करग्रहमहः' पाणिग्रहणमहोत्सव-प्रसरति इति सटंकः, शेषं स्वत ऊह्यम् ॥ १५ ॥

भावस्तोमपवित्रगोमयरसैः सिक्तेव भूः सर्वतः, संसिक्ता शमतोदकैरथ पथि न्यस्ता विवेकस्रजः ।
अध्यात्मामृतपूर्णकामकलशश्चक्रेऽत्र शास्त्रे पुरः, पूर्णानंदघने पुरं प्रविशति स्वीयं कृतं मंगलम् ॥१६॥

व्या० भावस्तोम, इत्यादि वृत्तं 'पूर्णानंदघने' शुद्धात्मज्ञाने पुरं प्रविशति स्वीयं कृतं मंगलं इति वाक्यं इत्यनादिसंसारसंसरणमिथ्यात्वासंयमकषाययोगहेतुचतुष्टयोपचितज्ञानावरणादिकर्मवृतानंतपर्यायस्य अलब्धात्मसाधनस्य विषमरोगशोकादिकंटकाकुलायां अंतरायोदयालब्धाहारादियोगारतितापतप्तायां, महाव्यसनसिंहव्याघ्रव्याप्तायां, कुप्रावचनिकलुंटाकधाटीकुंकारगर्जितभीषणायां, कुदेववेतालत्रासितायां, इंद्रियविषयसुखबुद्धिलक्षणभ्रांतिमरुमरीचिकाभूमिभूतायां, स्त्रीविलासादिविषवृक्षछायायुतायां, महाटव्यां धनादिपिपासाव्याकुलनेत्रस्य, तल्लाभादियोजनादिग्मूढस्य, परिभ्रमतः जीवस्य, कदाचित् जगदुपकारपरविद्याधरवरः गुरुः तस्य संयोगो जातः, गुरुणापि मार्गभ्रष्टं इतस्ततः परिभ्रमंतं दीनमशरणवलोक्योक्तं हे भद्र ! शृणु तवानंदकंदोपमं महोदयनगरस्य मार्गं, यत्र सदागमसरांसि तत्वपीयूषपूर्णानि आचार्योपाध्यायनिर्ग्रंथादयो नागरिकाः, सम्यग्दर्शनज्ञानोपयोगनिर्द्धारितमार्गप्रचाराः, यत्र क्षांत्यादिधर्मसम्यक्त्वादिगुणस्थानान्येव विश्रामभूमयः, स्वाध्यायविधिर्गीतमनोहरा पद्धतिः, तत्वानुभवतत्वैकत्वादयः श्रममंतरेण मार्गलंघनोपायाः, यमनियमाद्यष्टांगानि वाहनानि, श्रीमदर्हन्महाराजनीतिनिगृहीततस्करकुटिलाः चारित्राचारप्रवीणसामायिकादिसंयमस्थानसंनिवेशाः, यत्र श्रद्धाधारणानिर्द्धारितसिद्धिपुरगमननिर्व्याघातप्रचारं रत्नत्रयीलक्षणं। प्रवर्त्तय तद्मार्गे, येन कर्माष्टशत्रुव्यूहक्षयं कृत्वा निर्मलानंदशुद्धमव्याबाधमपुनरावृत्तिमहितं अनंतज्ञानदर्शनपूर्णपरमाह्वयं अमूर्त्तासंगनिरामयं द्रक्ष्यसि, तेन

भव्येन श्रमणादिसहायेन गृहीतस्तन्मार्गः, ततो गुरुणापि पाथेयोपमं दत्तं ज्ञानसाराख्यं यथार्थोपदेशमूलं श्रद्धानुभवास्वाद-मधुरतरास्वादं शमतारसशीतलजलं, तेन निर्विकल्पं प्रवृत्तो मार्गोल्लंघनेन अतः परमपाथेयोपमं ज्ञानसारं मोक्षमार्गे गच्छता सुखनिर्वाहार्थं अभ्यस्यं, तस्य तु चिरकालीनाक्षयतत्वहेतुभूता तदास्वादवृद्धिकरणार्थं विहितेयं टीका तत्वार्थविशेषावश्यकध-र्मसंग्रहिणी कर्मप्रकृत्यादिग्रंथालंबनपूर्वकं मया देवचंद्रेण स्वपरोपकाराय तत्वबोधनी नाम्ना, सा च चिरं नंदतादाचंद्रार्कं। अत्र च यन्मया स्वमतिदोषेण भ्रामिकं भाषितं तच्छोधयंतु दक्षाः परोपकारप्रवणाः, संतो हि गुणग्राहका एव, न खलु पुनः मत्सरिणो भवंति, तेन सतां प्रौढानंदकरी एवैषा टीका समाप्ता इति ॥ १५ ॥

अत्र सूत्रकृतः श्रीमद्यशोविजयोपाध्यायाः न्यायाचार्यवाग्वादिनो लब्धवराः दुर्वादिमदाभ्रपटलखंडनपवनोपमाः तेषां प्रशस्तिः ।

गच्छे श्रीविजयादिदेवसुगुरोः स्वच्छे गुणानां गणैः, प्रौढिं प्रौढिमधाम्नि जीतविजयप्राज्ञाः परामेयरुः ।
तत्सातीर्थ्यभृतां नयादिविजयप्राज्ञोत्तमानां शिशोः, श्रीमन्न्यायविशारदस्य कृतिनामेषा कृतिःप्रीतये ॥१६॥

इत्याध्यात्मज्ञानसारसूत्रं संपूर्णम् ।

( ग्रंथाग्रं २८१ सूत्रसंख्या. )

व्या० गच्छेति—श्री 'विजयदेव' सूरिवराणां गच्छे श्री 'जीतविजय' प्राज्ञाः तेषां सातीर्थ्यधराः श्री 'नयविजय'

प्राज्ञाः तेषां शिष्येण श्रीमद् "यशोविजयोपाध्यायेन" विहितोऽयं "ज्ञानसाराख्यः" द्वात्रिंशदष्टकप्रमाणो ग्रंथः । तट्टीकाच शुद्धमार्गदर्शकेन श्रीखरतरगच्छीयेन सदुपाध्यायश्रीदीपचंद्राणां शिष्येण देवचंद्रगणिना कृता ज्ञानमंजरी इति श्रेयः ।

---

## स्वप्रशस्तिं निवेदयति ( टीकाकारः )

नमः स्याद्वादरूपाय, सर्वज्ञाय महात्मने । देवेंद्रवृंदवंद्याय, वीराय विगतारये ॥ १ ॥
श्रीगौतमाद्‌ज्ञानधरा मुनीशा, देवार्द्धिपर्यंतममेयबोधाः । तेषां सुवंशे वरभास्कराभः, श्रीवर्द्धमानो मुनिराड् बभूव ॥२॥
संवेगरंगशाला-ग्रंथार्थकथनसूत्रधरतुल्यः । सूरिर्जिनेश्वराख्यः, सिद्धिविधिसाधने धीरः ॥ ३ ॥
तच्छिष्या जिनचंद्राख्याः, सूरयो गुणभूरयः । तच्छिष्याभयदेवार्या, गच्छे खरतरेश्वराः ॥ ४ ॥
येन नवांगी वृत्तिरुपपातिसोपांगवृत्तिविस्तारः । विदधे पंचाशकादिवृत्तिर्या बोधवृद्धिकरा ॥ ५ ॥
तत्पट्टे जिनवल्लभ-सूरिजिनदत्तसूरयोऽभूवन् । पट्टानुक्रमभानुर्जातो जिनकुशलसूरिगुरुः ॥ ६ ॥
तेषां वंशे जातो, गुणमणिरत्नाकरो महाभाग्यः । कलिकालपंकमग्नाँल्लोकान्निस्तारणे धीरः ॥ ७ ॥
श्रीमज्जिनचंद्राह्वः, सूरिर्नव्यार्कदीधितिप्रतापः । तस्यावदातसंख्या, गण्यते नो सुराधीशैः ॥ ८ ॥
तच्छिष्याः पाठकाः श्रीमत्पुण्यप्रधानसंज्ञिताः । सुमतेः सागराः शिष्यास्तेषां विद्याविशारदाः ॥ ९ ॥
तच्छिष्याः साधुरंगाख्या, राजसाराः सुपाठकाः । सर्वदर्शनशास्त्रार्थतत्वदेशनतत्पराः ॥ १० ॥

तच्छिष्या ज्ञानधर्माख्याः, पाठकाः परमोत्तमाः । जैनागमरहस्यार्थ—दायका गुणनायकाः ॥ ११ ॥
तेषां शिष्या महापुण्यकार्यसंसाधनोद्यताः । पाठका दीपचंद्राख्याः, शिष्यवर्गसमन्विताः ॥ १२ ॥
येन शत्रुंजये तीर्थे, कुंथुनाथार्हतः पुनः । चैत्ये समवसरणे, प्रतिष्ठा विहिता वरा ॥ १३ ॥
चतुर्मुखे सोमजिता कृते यः पूर्णतां व्यधात् । प्रतिष्ठां नैकबिंबानां, चक्रे सिद्धाचले गिरौ ॥ १४ ॥
अहम्मदावादमध्ये, सहस्रफणाद्यनेकबिंबानाम् । चैत्यानां च प्रतिष्ठां, चकार यो धर्मवृद्धये ॥ १५ ॥
तच्छिष्येण स्वबोधार्थं, देवचंद्रेण धीमता । व्याख्याता सुगमा शुद्धा, टीकेयं तत्त्वबोधनी ॥ १६ ॥
स्याद्वादस्य रहस्यानां, ज्ञानाल्लब्धोदयेन च । देवचंद्रेण बोधार्थं सुटीकेयं विनिर्मिता ॥ १७ ॥
संवद्रसनिधिजलधिचंद्र मिते ( १७९५ ) कार्त्तिके सिते पक्षे । पंचम्यां नव्यपुरे कृतेयं ज्ञानमंजरी ॥ १८ ॥
वाचना त्पठणादस्या, यो लाभो मे समागतः । तेनाहं भव्यसंघश्च, भवतां धर्मसाधकः ॥ १९ ॥
जयतु जिनराजस्य शासनं, दुःखनाशनम् । ज्ञानानंदविलासाढ्यं, सर्वसंपद्विवर्द्धनम् ॥ २० ॥
मंगलं भगवान्वीरो, मंगलं गौतमः प्रभुः । मंगलं स्थूलभद्राद्या, जैनधर्मोऽस्तु मंगलम् ॥ २१ ॥

इति श्रीज्ञानसारटीका ज्ञानमंजरी संपूर्णा ।

श्रीशुभं भूयात् ।

इति श्रीज्ञानसारटीका ज्ञानमंजरी संपूर्णा ।

